**ज्योतिष्मयी**=પ્રધાન છે કાન્તિ જેની એવા.
**च**=અને.
**वचसां** ( મૂ૦ वचस् )=વચનોનો.
**तनु**=મૂર્તિ.
**तेजस्**=પ્રકાશ.
**तनुतेजः**=મૂર્તિનો પ્રકાશ.
**आस्ते** ( ધા૦ आस् )=રહે છે.
**सूर्य**=સૂર્ય, રવિ.
**अतिशायिन्**=ચડિયાતો.
**सूर्यातिशायि**=સૂર્યથી ચડિયાતો.
**महिमा** ( મૂ૦ महिमन् )=મહિમા.
**असि** ( ધા૦ अस् )=છે.
**मुनि**=મુનિ, યોગી.
**इन्द्र**=મુખ્ય.
**लोक**=લોક.
**मुनीन्द्रलोके**=યોગીશ્વર-લોકમાં.

## પદ્યાર્થ

"( હે સતી ! ) જેણે **મેરુ** પર્વતનું અતિક્રમણ કર્યું છે એવો ( અર્થાત્ **મેરુ**ના કરતાં **પણ** વધારે સ્થિર તેમજ ઉચ્ચ ) તથા વળી **બૃહસ્પતિને** ( પણ ) પ્રશંસા કરવા યોગ્ય એવો જેનો વચનોનો મહિમા તથા જેના દેહનું ગરિષ્ઠ તેમજ સૂર્યથી પણ અધિક તેજ (અર્થાત્ જેના લિપિરૂપી દેહની મનોહર રચના ) એ બંને યોગીશ્વર ( ગણધર ) લોકમાં ( માનનીય ) વર્તે છે, તે સ્વ મતને વિષે ( જ્ઞાનાદિક ) લક્ષ્મીના ઉત્પત્તિ-સ્થાનરૂપ [ અથવા **જૈન** મતને વિષે સિદ્ધિ (-શિલા ) નામની પૃથ્વીરૂપ અથવા **શૈવ** મતને વિષે ( અણિમાદિક આઠ ) સિદ્ધિઓના ઉત્પત્તિ-સ્થાનરૂપ ] એવી તેમજ સર્વોત્તમ કાન્તિવાળી એવી તું શાશ્વતી વર્તે છે."—૧૭

* * * *

स्पष्टाक्षरं सुरभि सु समृद्धशोभं
जेगीयमानरसिकप्रियपञ्चमेष्टम् ।
देदीप्यते सुमुखि ! ते वदनारविन्दं
विद्योतयज्जगदपूर्वशशाङ्कबिम्बम् ॥ १८ ॥

## टीका

हे 'सुमुखि !' सुष्ठु शोभनं मुखं यस्याः सा सुमुखी तस्याः संबोधनं हे सुमुखि ! ते—तव 'वदनारविन्दं' वदनमेव—मुखमेव अरविन्दं—कमलं वदनारविन्दं—मुखकमलं 'देदीप्यते' अतिशयेन दीप्यतीति देदीप्यते, अतिशयेन शोभत इत्यर्थः । किंविशिष्टं वदनारविन्दं ? 'स्पष्टाक्षरं' स्पष्टानि—प्रकटानि अक्षराणि ओंकारादीनि—द्विपञ्चाशद्वर्णा यस्मिंस्तत् स्पष्टाक्षरम् । पुनः किंविशिष्टं वदनारविन्दं ? सुरभि—सुगन्धि । पुनः किंविशिष्टं ? 'सुभ्रु' शोभना भ्रुवो यस्मिंस्तत् सुभ्रु । पुनः किंविशिष्टं वदनारविन्दं ? 'समृद्धशोभं' समृद्धा—सम्यक् प्रकारेण वृद्धिं प्राप्ता शोभा यस्मिंस्तत् समृद्धशोभम् । पुनः किंविशिष्टं वदनारविन्दं ? 'जेगीयमानरसिकप्रियपञ्चमेष्टं' अतिशयेन गातुकामा जेगीयमाना ये 'रसिका' रसं—कामादि स्नेहं विदन्तीति रसिकाः तेषां प्रियः—वल्लभो योऽ-

१ આની માહિતી માટે જુઓ શ્રીચતુર્વિંશતિજિનાનન્દસ્તુતિ ( પૃ૦ ૫૮–૫૯ ).
२ 'ॐकारादीनि' इति ख-पाठः । ३ 'अतिशयेन......पञ्चमेष्टं' इति पाठः क-पुस्तके नास्ति ।

श्रीआगमोदयसमितिग्रन्थोद्धारे ग्रन्थाङ्कः ५४

श्रीभक्तामरस्तोत्रपादपूर्तिरूपस्य

# काव्यसङ्ग्रहस्य द्वितीयो विभागः।

श्रीधर्मसिंहसूरिसूत्रितस्वोपज्ञटीकाविभूषितसरस्वतीभक्तामर-
श्रीलक्ष्मीविमलमुनिवर्यविरचितशान्तिभक्तामर-श्रीविनय-
लाभगणिगुम्फितपार्श्वभक्तामरस्तोत्रत्रयं
परिशिष्टाष्टकेन समलङ्कृतम्।

गूर्जरभाषानुवादविवरणादिपरिष्कृतं संशोधितं च
कापडियेत्युपाह्वश्रीरसिकदासतनुजनुषा हीरालालेन।

प्रसिद्धिकारकः—

शाह जीवनचंद साकरचंद जवेरी।

कार्यवाहिनी—

श्रीमती आगमोदयसमितिः।

वि. सं. १९८३ ] वीरसंवत् २४५३ [ ई. स. १९२७

प्रतयः १२५०।

पण्यं रूप्यक[illegible]।

सौ पञ्चमो रागः तेनेष्टं-मनोज्ञं यत् तत् जेगीयमानरसिकप्रियपञ्चमेष्टं-गीताभिलाषिरसिकजन-वाञ्छितपञ्चमरागमनोहरं, रसिकानां वसन्तोत्सवे पञ्चमरागप्रियत्वं सरस्वत्याः तन्त्रीवादनपञ्च-मरागप्रियत्वं यथा-"सरस्वत्यास्तु कच्छपी" इति हैमः (अभि० का०२,श्लो० २०२), कच्छपीको-किलयोः पञ्चमस्वरे मनोऽभीष्टम्" इति संगीतश्रुतिः । पुनस्तव वदनं किं कुर्वत् ? जगद्-विश्वं विद्योतयत्-विशेषेण द्योतयत्-प्रकाशयत् । पुनः किंविशिष्टं वदनारविन्दं ? 'अपूर्वशशाङ्कबिम्बं' अपूर्वः-अनन्योपमेयः स चासौ शशाङ्कः-चन्द्रस्तस्य बिम्बमिव-मण्डलमिव बिम्बं-वर्तुलं यत् तत् ॥१८॥

## अन्वयः

( हे ) सु-मुखि ! ते स्पष्ट-अक्षरं, सुरभि, सु-भ्रु, समृद्ध-शोभं, जेगीयमान-रसिक-प्रिय-पञ्चम-इष्टं, जगत् विद्योतयत्, अ-पूर्व-शशाङ्क-बिम्बं वदन-अरविन्दं देदीप्यते ।

## શબ્દાર્થ

**स्पष्ट**=સ્પષ્ટ, પ્રકટ.
**अक्षर**=અક્ષર, વર્ણ.
**स्पष्टाक्षरं**=પ્રકટ છે અક્ષરો જેને વિષે એવું.
**सुरभि** ( मू० सुरभि )=સુગંધથી યુક્ત.
**सु**=શ્રેષ્ઠતાવાચક શબ્દ.
**भ्रु**=ભમર.
**सुभ्रु**=સુંદર છે ભમર જેમાં એવું.
**समृद्ध**=સારી રીતે વૃદ્ધિ પામેલ.
**शोभा**=શોભા.
**समृद्धशोभं**=સારી રીતે વૃદ્ધિ પામેલી છે શોભા જેને વિષે એવું.
**जेगीयमान** ( धा० गै )=વારંવાર ગવાતું.
**रसिक**=રસ લેનાર, શોખીન.
**प्रिय**=વલ્લભ.
**पञ्चम**=પંચમ ( રાગ ).
**इष्ट**=મનોહર.
**जेगीयमानरसिकप्रियपञ्चमेष्टं**=ગીતમાં રસ લેનારાને વલ્લભ એવા પંચમ ( રાગ )વડે મનોહર.
**देदीप्यते** ( धा० दीप् )=અતિશય શોભે છે.
**मुख**=વદન.
**सुमुखि** !=હે સુંદર છે વદન જેનું એવી !
**ते** ( मू० युष्मद् )=તારૂં.
**वदन**=મુખ.
**अरविन्द**=કમલ.
**वदनारविन्दं**=મુખ-કમલ.
**विद्योतयत्** ( धा० द्युत् )=વિશેષે કરીને પ્રકાશ કરનાર.
**जगत्** ( मू० जगत् )=દુનિયાને.
**अपूर्व**=અસાધારણ.
**शश**=મૃગ.
**अङ्क**=લાંછન.
**शशाङ्क**=મૃગનું લાંછન છે જેને તે, ચન્દ્ર.
**बिम्ब**=મણ્ડળ.
**अपूर्वशशाङ्कबिम्बं**=અપૂર્વ ચન્દ્રના મણ્ડળ(સમાન).

## પદ્યાર્થ

### સરસ્વતીના વદન-કમલની શોભા—

"હે સુન્દર વદનવાળી ( **સરસ્વતી** ) ! જેને વિષે ( અકારાદિ બાવન ) અક્ષરો સ્પષ્ટ છે એવું, તથા સુગંધયુક્ત, તેમજ વળી સુંદર ભવાંવાળું એવું, તથા વળી રૂડી રીતે વૃદ્ધિ પામેલી શોભાવાળું, તેમજ ગીતના અભિલાષીને પ્રિય એવા પંચમ ( રાગ ) વડે મનોહર એવું, તેમજ વળી જગતૂનો વિશેષતઃ પ્રકાશ કરનારૂં એવું અને વળી અસાધારણ ચન્દ્રના મણ્ડળ ( સમાન ગોળ એવું ) તારૂં વદન-કમલ અતિશય શોભે છે."—૧૮

* * * *

१ 'वादने पञ्चमरागे प्रिय०' इति ख-पाठः । २ 'कच्छपीति हैमः' इति पाठः क-पुस्तके नास्ति । ३ 'वदनारविन्दं' इति प्रतिभाति ।

प्राप्नोत्यमुत्र सकलावयवप्रसङ्गि-
निष्पत्तिमिन्दुवदने ! शिशिरात्मकत्वम् ।
सिक्तं जगत् त्वदधरामृतवर्षणेन
कार्यं कियज्जलधरैर्जलभारनम्रैः ?॥ १९ ॥

## टीका

हे 'इन्दुवदने!' इन्दुवत्–चन्द्रवद् वदनं यस्याः सा इन्दुवदना तस्याः संबोधनं हे इन्दुवदने–चन्द्रमुखि! अमुत्र–युगे संसारव्यवहारे अमुष्मिन्नित्यमुत्रेत्यव्ययम्। 'त्वदधरामृतवर्षणेन' तव अधरौ त्वदधरौ त्वदधराभ्यां अमृतवर्षणं–सुधास्रवणं तेन त्वदधरामृतवर्षणेन सिक्तं–सिञ्चितं जगद्–विश्वं 'सकलावयवप्रसङ्गिनिष्पत्तिं' सकलानां–समस्तानां अवयवानां प्रसङ्गोऽस्या अस्तीति सकलावयवप्रसङ्गिनी, सा चासौ निष्पत्तिश्च सम्पूर्णप्राप्तिलक्षणा तां सकलावयवप्रसङ्गिनिष्पत्तिं-समग्रसमृद्धिरससिद्धिसम्पादिकां निष्पत्तिं प्राप्नोति। तत्प्राप्तौ च–पुनः शिशिरात्मकत्वं–शीतलस्वभावत्वं प्राप्नोति। तत्र विशेष्यपदान्तरेऽनुक्तचकारोऽपि ग्राह्यः, त्वद्वचनामृतासिक्तं जगत् शीतलं जातं सर्वावयवनिष्पत्तिसम्पन्नं च भूतं, तदा जलधरैः–मेघैः कियत् कार्यं ? अपि तु न कार्यम्। किंविशिष्टैर्जलधरैः ? 'जलभारनम्रैः' जलस्य भारो–बहूपचयः तेन नम्रा–नम्रतां प्राप्ता जलभारनम्रास्तैर्जलभारनम्रैः। सूर्यातपे दीपारोपवत् आघ्राते जेमनामन्त्रणवत् अत्रापि सुधासिक्ते जलसेचनमन्याय्यम् ॥ १९ ॥

## अन्वयः

( हे ) इन्दु–वदने ! त्वत्–अधर–अमृत–वर्षणेन सिक्तं जगत् शिशिर–आत्मकत्वं सकल–अवयव–प्रसङ्गिन्–निष्पत्तिं ( च ) अमुत्र प्राप्नोति ( तदा ) जल–भार–नम्रैः जलधरैः कियत् कार्यम् ? ।

## શબ્દાર્થ

प्राप्नोति ( धा० आप् )=પ્રાપ્ત કરે છે.
अमुत्र=અત્ર.
सकल=સમસ્ત.
अवयव=અવયવ.
प्रसङ्गिन्=પ્રસંગથી યુક્ત.
निष्पत्ति=પ્રાપ્તિ.
सकलावयवप्रसङ्गिनिष्पत्तिं=સમસ્ત અવયવોનો પ્રસંગ છે જેને વિષે એવી નિષ્પત્તિને.
इन्दु=ચન્દ્ર.
इन्दुवदने !=હે ચન્દ્રના સમાન મુખ છે જેનું એવી !
शिशिर=શીતલ.
आत्मकत्व=સ્વભાવ.
शिशिरात्मकत्वं=શીતલ સ્વભાવને, શીતલતાને.
सिक्तं ( मू० सिक्त )=સિંચાયેલું.
जगत् ( मू० जगत् )=જગત, દુનિયા.
अधर=અધર, હોઠ.
अमृत=અમૃત.
वर्षण=વરસવું તે, વૃષ્ટિ.
त्वदधरामृतवर्षणेन=તારા અધરોમાંના અમૃતની વૃષ્ટિથી.
कार्यं ( मू० कार्य )=કામ.
कियत् ( मू० कियत् )=કેવડું.
जलधरैः ( मू० जलधर )=મેઘોથી.
जल=જળ, પાણી.
भार=ભાર.
नम्र=નમી પડેલ.
जलभारनम्रैः=જળના ભાર વડે નમ્ર બનેલા.

श्रीभक्तामरस्तोत्रनी पाद-पूर्तिरूप

# કાવ્ય-સંગ્રહનો દ્વિતીય વિભાગ.

## શ્રીધર્મસિંહસૂરિકૃત સરસ્વતી-ભક્તામર

( સ્વોપજ્ઞ ટીકા સહિત

તથા

## શ્રીલક્ષ્મીવિમલ મુનિવર્યકૃત શાન્તિ-ભક્તામર

તેમજ

## શ્રીવિનયલાભગણિકૃત પાર્શ્વ-ભક્તામર

( આઠ પરિશિષ્ટો સહિત )

સંશોધન, ભાષાન્તર તથા વિવેચન કરનાર

પ્રો૦ હીરાલાલ રસિકદાસ કાપડિયા, એમ. એ.,

ન્યાયકુસુમાંજલિ, સ્તુતિ-ચતુર્વિંશતિકા વગેરેના અનુવાદક.

પ્રસિદ્ધ કર્તા—

શ્રીઆગમોદયસમિતિ તરફથી

જીવણચંદ સાકરચંદ જવેરી, મુંબાઇ.

પ્રથમ આવૃત્તિ—પ્રતિ ૧૨૫૦

વિક્રમ સંવત્ ૧૯૮૩ વીર સંવત્ ૨૪૫૩ ઈ. સ. ૧૯૨૭

મૂલ્ય ૩-૦-૦

### પદ્યાર્થ

" હે ચન્દ્ર-મુખિ ( સારદા ) ! તારા અધરોમાંથી ( સ્રવતા ) અમૃતની વૃષ્ટિથી સિક્ત બનેલું જગત્ શીતલતાને તેમજ સમરત ( સમૃદ્ધિ, રસ અને સિદ્ધિરૂપી ) અવયવોને સંપાદન કરાવનારી એવી નિષ્પત્તિને ( પણ ) પામે છે. ( તો પછી ) જળના ભાર વડે નમ્ર બનેલા એવા મેઘોનું શું કામ છે ? "—૧૯

* * * * *

मातस्त्वयी मम मनो रमते मनीषि-
मुग्धागणे न हि तथा नियमाद् भवत्याः ।
त्वस्मिन्नमेयपणरोचिषि रत्नजातौ
नैवं तु काचशकले किरणाकुलेऽपि ॥ २० ॥

### टीका

हे मातः–हे लक्ष्मि ! यथा मम मनस्त्वयि रमते–रुचिं लभते हि-निश्चितम्, तथाऽन्यस्मिन् मुग्धागणे–स्त्रीगणे मुह्यन्ति कामादिचेष्टास्विति मुग्धास्तासां गणः–समूहः मुग्धागणः, मनीषी चासौ मुग्धा( गण )श्च मनीषिमुग्धागणस्तस्मिन् मनीषिमुग्धागणे मम मनो न रमते–न धृतिं प्राप्नोति । कस्मात् ? नियमात्–निश्चयात् संयमादिगुणाराधनात्, यादृशी देवीषु क तादृशी मानुषीषु धृतिरिति भावः । किंविशिष्टे मुग्धागणे ? भवत्याः–त्वत्तः त्वस्मिन्–हीने । त्वच्छब्दो हीनार्थवाचकः सर्वादिगणे प्रतीत एव, " त्वदधरमधुरमधूनि पिबन्तः " इति प्रयोगदर्शनात् । भवत्या अयोनिजन्मत्वेनाधिक्यं, मानुषीणां योनिजन्मत्वेन हीनता । अर्थान्तरेण दृष्टान्तेन द(द्र)ढयति–ममेव कस्यचित् परीक्षकस्य मनो रत्नजातौ त्वदुपमेयायां तु–पुनः यथा रमते । किंविशिष्टायां रत्नजातौ ? अमेयपणरोचिषि–बहुमूल्यकान्तौ अमेयः–प्रमाणं कर्तुमशक्यः पणः–क्रयो यस्याः सा अमेयपणा, एवंविधा रोचिः–द्युतिर्यस्यां साऽमेयपणरोचिस्तस्यां अमेयपणरोचिषि । एवं पूर्वोक्तवाक्येन मुग्धागणोपमाने 'काचशकले' काचस्य शकलं–खण्डं तस्मिन् काचशकले–काचखण्डे परीक्षकमनो न धृतिमेति । किंविशिष्टे काचशकले ? ' किरणाकुलेऽपि ' किरणैः–क्षणभङ्गुराभिः चकचकितकान्तिभिः आकुलं-मिश्रितं-संमीलितं अपि—निश्चयेन किरणाकुलं तस्मिन् किरणाकुलेऽपि । अनादर एवेति भावः ॥ २० ॥

### अन्वयः

हे मातः ! ( यथा ) त्वयि मम मनः रमते, तथा भवत्याः त्वस्मिन् मनीषिन्–मुग्धा–गणे नियमात् न हि ( रमते ) । ( मम इव कस्यचित् परीक्षकस्य मनः यथा ) अ-मेय-पण-रोचिषि रत्न-जातौ ( रमते ), एवं किरण–आकुले अपि काच-शकले तु न ।

१ 'यि मम ( मातर्मम त्वयि )' इति क–पाठः । २ 'मुग्धा० मनीषि०' इति पाठः क–पुस्तके नास्ति । ३ 'मनीषि'-पदरहितः पाठः क–पुस्तके ।

## શબ્દાર્થ

**मातः !** ( मू० मातृ )=હે માતા !
**त्वयि** ( मू० युष्मद् )=તારે વિષે.
**ई**=(૧) લક્ષ્મી; (૨) સંબોધનવાચક અવ્યય.
**मम** ( मू० अस्मद् )=મારૂં.
**मनः** ( मू० मनस् )=ચિત્ત.
**रमते** ( धा० रम् )=રમે છે.
**मनीषिन्**=પણ્ડિત, ચતુર.
**मुग्धा**=મુગ્ધા.
**गण**=સમૂહ, ચક્ર.
**मनीषिमुग्धागणे**=ચતુર મુગ્ધાઓના સમૂહને વિષે.
**न**=નહિ.
**हि**=નિશ્ચયવાચક અવ્યય.
**तथा**=તેવી રીતે
**नियमात्** ( मू० नियम )=નિયમે કરીને.
**भवत्याः** ( मू० भवती )=આપશ્રીથી.
**त्वस्मिन्** ( मू० त्वत् )=હીનને વિષે.
**मेय** ( धा० मा )=માપી શકાય તેવું.
**पण**=ક્રય, ખરીદવું તે.
**रोचिस्**=પ્રકાશ, પ્રભા.
**अमेयपणरोचिषि**=અમેય છે ક્રય જેનો એવી પ્રભા છે જેની એવા.
**रत्न**=મણિ.
**जाति**=જાત.
**रत्नजातौ**=રત્ન-જાતિને વિષે.
**एवं**=એ પ્રકારે.
**तु**=કિન્તુ.
**काच**=કાચ.
**शकल**=ટુકડો, કકડો.
**काचशकले**=કાચના કકડાને વિષે.
**किरण**=કિરણ.
**आकुल**=વ્યાપ્ત.
**किरणाकुले**=કિરણોથી વ્યાપ્ત.
**अपि**=પણ.

## પદ્યાર્થ

"હે માતા ! જેમ મારૂં મન તારે વિષે રમે છે, તેમ તે આપશ્રીથી હીન એવી ચતુર મુગ્ધાઓના સમૂહને વિષે (પણ) તે નક્કી રમતું નથી. (કેમકે એ તો દેખીતી વાત છે કે) મારા (જેવા કોઇ પણ રત્ન-પરીક્ષકનું) મન જેનો ક્રય અમેય છે એવી પ્રભાયુક્ત (અર્થાત્ અતિશય તેજદાર હોવાને લીધે અમૂલ્ય એવા) રત્ન-જાતિને વિષે જેવું રમે, તેવું તો કિરણોથી વ્યાપ્ત એવા (પણ) કાચના કકડાને વિષે નહિ (જ) રમે."—૨૦

* * * * *

चेतस्त्वयि श्रमणि ! पातयते मनस्वी
स्याद्वादिनिम्ननयतः प्रयते यतोऽहम् ।
योगं समेत्य नियमव्ययपूर्वकेन
कश्चिन्मनो हरतिनाऽथ भवान्तरेऽपि ॥ २१ ॥

## टीका

हे श्रमणि ! श्रमं-खेदं दुष्टाष्टकर्मजनितं नयति-स्फेटयतीति श्रमणी, अथवा सहजातौ श्रमौ-रागद्वेषरूपौ ताभ्यां रहिता श्रमणी तस्याः संबोधनं हे श्रमणि ! यदि कदापि कश्चिन्मनस्वी-पाखण्डिको भवान्तरेऽपि-अन्यभवेऽपि मम मनः पातयते-भ्रष्टं कुर्यात् । कस्मात् ? 'स्याद्वादिनिम्ननयतः' स्याद्वादिनां-तीर्थकृतां निम्नो-गम्भीरो-बह्वर्थो योऽसौ नयो-नैगमादिसप्तधारूपः स्याद्वादिनिम्ननयः तस्मात् स्याद्वादिनिम्ननयतः, 'पञ्चम्यास्तस्( सिल् ? )' ( पा० अ० ५, पा०

३, सू० ७) यतो–यस्मात् कारणात् पूर्वोक्तहेतोः अहं तच्चेतः–चित्तं त्वयि विषये–सप्तभङ्गीसध्रीच्यां विषये प्रयते–प्रकर्षेण यते–यत्नं कुर्वे, निश्चलं करोमीत्यर्थः । सप्तनयवतां शासनाधिष्ठातृत्वेन सहायकर्त्री त्वमेव ख्यातेति, श्रमणि इति संबोधनपदमपि प्रतीतम् । किं कृत्वा ? ‘नियमव्यवपूर्वकेन हरतिना सह योगं समेत्य’ नियमो–निश्चयः, (स च) विश्च अवश्च व्यवौ अव्ययौ–उपसर्गौ, ते च पूर्वे यस्य स नियमव्यवपूर्वकस्तेन नियमव्यवपूर्वकेन हरतिना ‘हृञ् हरणे’ (इति) धातुना सह ‘इकृश्तिपौ धातुनिर्देशे’ (सा० सू० १४७२) (इतिवचनात्) हरतिरूपं तेन हरतिना, व्यवपूर्वेण व्यवहार इति शब्द उत्पद्यते, तयोरेकपदे निश्चयव्यवहाराभ्यां नयाभ्यां योगं समेत्य–एकस्थाने संयोज्य–हृदि अवधार्य निश्चयव्यवहाररूपः स्याद्वादिनां नयः, द्वैतवादिनो जैना इति ॥ २१ ॥

## अन्वयः

(हे) श्रमणि ! अथ कश्चित् मनस्वी भव-अन्तरे अपि (मे) मनः स्याद्वादिन्-निम्न-नयतः पातयते यतः नियम-वि-अव-पूर्वकेन हरतिना योगं समेत्य अहं त्वयि चेतः प्रयते ।

## શબ્દાર્થ

चेतः ( मू० चेतस् )=ચિત્તને.
त्वयि ( मू० युष्मद् )=તારે વિષે.
श्रम=ખેદ.
नी=લઇ જવું.
श्रमणि !=( ૧ ) હે ખેદને હરનારી; ( ૨ ) હે ખેદરહિત !
पातयते ( धा० पत् )=ભ્રષ્ટ કરે.
मनस्वी ( मू० मनस्विन् )=પાખણ્ડી.
स्याद्वादिन्=સ્યાદ્વાદી, સ્યાદ્વાદની પ્રરૂપણા કરનાર, તીર્થંકર.
निम्न=ગંભીર.
नय=નય યથાર્થ અભિપ્રાય.
स्याद्वादिनिम्ननयतः=સ્યાદ્વાદીના ગંભીર નયથી.
प्रयते ( धा० यत् )=પ્રયત્ન કરૂં છું.
यतः=જેથી કરીને.
अहं ( मू० अस्मद् )=હું.
योगं ( मू० योग )=સંબંધને.
समेत्य ( धा० इ )=પ્રાપ્ત કરીને.
नियम=નિશ્ચય.
वि=ઉપસર્ગ-વિશેષ.
अव= ,,
पूर्व=આગળ.
नियमव्यवपूर्वकेन=‘નિશ્ચય’ અને ‘વ્યવ’પૂર્વક.
कश्चित् ( मू० किम् )=કોઇક.
मनः ( मू० मनस् )=મનને.
हरतिना ( मू० हरति )=‘હરતિ’ની સાથે.
अथ=વિકલ્પવાચક અવ્યય.
भव=ઉત્પત્તિ, જન્મ.
भवान्तरे=અન્ય જન્મમાં.
अपि=પણ.

## પદ્યાર્થ

“હે ( અષ્ટ કર્મ વડે ઉત્પન્ન થયેલા ) ખેદને હરનારી [ અથવા ( રાગ-દ્વેષરૂપી ) શ્રમથી રહિત ] ! કોઇક ( સ્વકપોલકલ્પિત વિચારને પ્રકટ કરનાર ) મનસ્વી (કદાચ) મારા મનને અન્ય ભવમાં પણ સ્યાદ્વાદ[1]ની પ્રરૂપણા કરનારા ( તીર્થંકરો )ના ( નૈગમાદિક ) ગંભીર નયથી ભ્રષ્ટ કરે એટલા માટે નિશ્ચય અને વ્યવહારની એક સ્થાને યોજના કરીને ( અર્થાત્ નિશ્ચય અને વ્યવહાર એમ બંનેથી યુક્ત જૈન માર્ગ છે એ વાતને હૃદયમાં ધારણ કરીને ) ([2]સપ્તભંગીસ્વરૂપી ) તારા વિષે મારા મનને હું નિશ્ચળ કરૂં છું.”—૨૧

* * * * *

---

૧ સ્યાદ્વાદ યાને અનેકાન્તવાદની સ્થૂલ માહિતી સારૂ જુઓ **સ્તુતિ–ચતુર્વિંશતિકા** ( પૃ૦ ૧૧૨–૧૧૫ )

૨ સપ્તભંગીના સ્વરૂપ સારૂ જુઓ ન્યાયવિશારદ ન્યાયાચાર્ય ઉપાધ્યાય શ્રીયશોવિજયકૃત **નય–રહસ્ય** તેમજ શ્રીવાદિદેવસૂરિકૃત **પ્રમાણનયતત્ત્વાલોકાલંકાર**નો ચોથો તેમજ સાતમો પરિચ્છેદ.

## સમર્પણ-પત્રિકા

પૂજ્યપાદ પ્રવર્તક શ્રીમાન્ ૧૦૮

# કાંતિવિજયજી

લીંબડી.

આપશ્રી પોતાના સંગ્રહ કરેલા અપૂર્વ પુસ્તકભંડારમાંથી

હસ્તલિખિત ગ્રન્થોની અમૂલ્ય પ્રતિઓ વખતોવખત

અમોને પુસ્તકસંશોધન નિમિત્તે મોકલાવી

પુસ્તકપ્રકાશન કાર્યમાં જે મદદ આપો છો

તેના સ્મરણ-ચિહ્ન તરીકે આ

ગ્રન્થ-રત્ન આપની સમ્મતિ વિના

આપશ્રીના કરકમળમાં સમર્પી

અંશતઃ કૃતાર્થ થવાની

અભિલાષા રાખીયે

છિયે.

મુંબાઈ.
તા. ૯-૧૧-૨૭
બુધવાર, કાર્તિકી પૂર્ણિમા
વિક્રમ સંવત્ ૧૯૮૪.

જીવણચંદ સાકરચંદ જવેરી
તથા
શ્રીઆગમોદયસમિતિના અન્ય માનદ મન્ત્રીઓ.

ज्ञानं तु सम्यगुदयस्यनिशं त्वमेव
व्यत्याससंशयधियो मुखरा अनेके ।
गौराङ्गि ! सन्ति बहुभाः ककुभोऽर्कमन्याः
प्राच्येव दिग् जनयति स्फुरदंशुजालम् ॥ २२ ॥

## टीका

हे 'गौराङ्गि !' गौरम्–उज्ज्वलवर्णम् अङ्गं अस्या अस्तीति गौराङ्गी तस्याः संबोधनं हे गौराङ्गि ! त्वमेव–भवत्येव वाग्देवी एवानिशं–निरन्तरं सम्यग्ज्ञानं 'उदयसि' उत्–प्राबल्येन प्रापयसि, उदयं गच्छसि इत्यर्थः । तु–पुनः मुखरा–वाचाला अनेके–बहवः सन्ति । किंविशिष्टा मुखराः ? 'व्यत्याससंशयधियः' मिथ्याध्यवसायो व्यत्यासः–विपर्ययः, अनवधारणं ज्ञानं संशयः, व्यत्यासे च संशये च धीः–बुद्धिर्येषां ते व्यत्याससंशयधियः, तेषां सम्यग्ज्ञानोदयः कुत इति भावः । दृष्टान्तेन द(द्र)ढयति—प्राची–पूर्वैव दिग् अर्क–सूर्यं जनयति–उदयं प्रापयति । किंविशिष्टमर्कं ? 'स्फुरदंशुजालं' स्फुरन्–प्रसर्पन्–दीप्यन् अंशूनां–सहस्रसंख्यरश्मीनां जालः–समूहो यस्य स स्फुरदंशुजालस्तं स्फुरदंशुजालम् । तु–पुनः अन्याः ककुभो–दिशो 'बहुभा' बहूनि भानि–नक्षत्राणि यासु ता बहुभाः–बहुनक्षत्रोदयिकाः सन्ति । कुतस्तासु भानूदयः ? इत्याभाणकः ॥ २२ ॥

## अन्वयः

( हे ) गौर-अङ्गि ! त्वं एव सम्यग् ज्ञानं अनिशं उदयसि, व्यत्यास-संशय-धियः मुखराः तु अनेके सन्ति । प्राची एव दिग् स्फुरत्-अंशु-जालं अर्कं जनयति, अन्याः तु ककुभाः बहु-भाः सन्ति ।

## શબ્દાર્થ

ज्ञानं ( मू० ज्ञान )=જ્ઞાનને.
तु=પણ.
सम्यग् ( मू० सम्यच् )=શુદ્ધ.
उदयसि ( धा० अय् )=પ્રાપ્ત કરે છે.
अनिशं=સર્વદા.
त्वं ( मू० युष्मद् )=તું.
एव=જ.
व्यत्यास=વિપર્યય.
संशय=સંદેહ.
धी=મતિ, બુદ્ધિ.
व्यत्याससंशयधियः=વિપર્યય અને સંશયને વિષે મતિ છે જેની એવા.
मुखराः ( मू० मुखर )=વાચાળ.
अनेके ( मू० अनेक )=અનેક, બહુ.
गौर=ઉજ્જ્વલ.
अङ्ग=દેહ.
गौराङ्गि !=હે ઉજ્જ્વલ છે દેહ જેનો એવી ! (સં૦)
सन्ति ( धा० अस् )=છે.
बहु=બહુ, અનેક.
बहुभाः=ઘણાં છે નક્ષત્રો જેને વિષે એવી.
ककुभः ( मू० ककुभ् )=દિશાઓ.
अर्क ( मू० अर्क )=સૂર્યને.
अन्याः ( मू० अन्या )=બીજી.
प्राची ( मू० प्राच् )=પૂર્વ.
दिग् ( मू० दिश् )=દિશા.
जनयति ( धा० जन् )=જન્મ આપે છે.
स्फुरत् ( धा० स्फुर् )=પ્રકાશમાન.
अंशु=કિરણ.
जाल=સમૂહ.
स्फुरदंशुजालं=પ્રકાશમાન છે કિરણોનો સમૂહ જેનો એવા.

## समर्पण-पत्रिका

# पूज्यपादाः प्रवर्तकाः श्रीमन्तः

# कान्तिविजयाः !

श्रीमन्तो भवन्तः स्वसंगृहीतादपूर्वपुस्तकभाण्डागारात्
हस्तलिखितानां ग्रन्थानाममूल्याः प्रतीः प्रति-
समयमस्मभ्यं पुस्तकसंशोधनार्थं संप्रेष्य
पुस्तकप्रकाशनकर्मणि यत् साहाय्यं प्रय-
च्छन्ति तत्स्मरणचिह्नरूपमेतद् ग्रन्थ-
रत्नं भवदनुज्ञामन्तरेणापि श्रीमता
भवतां करकमलेषु समर्प्य
अंशतः कृतार्थीभवितुं
अभिलषामहे—

विक्रमाब्दः १९८४
कार्तिकस्य शुक्ला पूर्णिमा बुधवासरः
ता. ९–११–२७
मोहमय्याम् ।

भवदीया :
झवेरी-साकरचन्द्रात्मज-जीवनचन्द्रः
अन्ये च श्रीआगमोदयसमिते-
र्मानदमन्त्रिणः ।

## પદ્યાર્થ

"હે ગૌર( વર્ણી ) દેહવાળી ( સારદા ) ! તું જ સર્વદા સમ્યગ્ જ્ઞાનને પ્રાપ્ત કરે છે ( અર્થાત્ તારૂં જ જ્ઞાન સમ્યગ્ છે ). ( બાકી ) વિપર્યય અને સંશયથી યુક્ત મતિવાળા તો અનેક વાચાળ છે ( અર્થાત્ તેઓ મિથ્યાજ્ઞાની છે ). ઘણાં નક્ષત્રોથી યુક્ત એવી દિશાઓ તો ( ઘણી ) છે, પરંતુ સ્ફુરાયમાન કિરણોના સમૂહવાળા એવા સૂર્યને જન્મ આપનારી ( અર્થાત્ તેના ઉદયથી વિભૂષિત બનનારી ) દિશા તો પૂર્વજ છે."—૨૨

* * * *

यो रोदसीमृतिजनी गमयत्युपास्य
जाने स एव सुतनु ! प्रथितः पृथिव्याम् ।
पूर्वं त्वयाऽऽदिपुरुषं सदयोऽस्ति साध्वि !
नान्यः शिवः शिवपदस्य मुनीन्द्रपन्थाः ॥ २३ ॥

## टीका

हे 'सुतनु !' शोभना तनूर्यस्याः सा सुतनूस्तस्याः संबोधनं हे सुतनु ! हे 'साध्वि !' साध्यते संयमादिगुणैः शिवमिति साध्वी तत्संबोधने हे साध्वि ! अहमेवं जाने-विचारयामि—स एव मुनीन्द्रपन्थाः स्वर्गापवर्गसाधकः शिवपदस्य-मोक्षस्थानस्य अस्ति मुनीन्द्राणां-केवलिनां पन्था-मार्गः मुनीन्द्रपन्था अस्ति-विद्यते, अन्यः पन्थाः-तद्व्यतिरिक्तः कोऽपि न । किंविशिष्टो मुनीन्द्रपन्थाः ? पृथिव्यां-भूमौ अर्थात् कर्मभूमौ मनुष्यक्षेत्रे त्वया-ब्राह्म्या प्रथितः-विस्तारितः । किं कृत्वा ? आदिपुरुषं-आदीश्वरं उपास्य-सेवित्वा । पुनः किंविशिष्टो मुनीन्द्रपन्थाः ? सदयः-सकृपः, दयया सह वर्तत इति सदयः । पुनः किंविशिष्टः (मुनीन्द्र)पन्थाः ? शिवो-निरुपद्रवः । स कः ? यो मुनीन्द्रपन्था ज्ञानदर्शनचारित्ररूपः 'रोदसीमृतिजनी' मरणं-मृतिः, जननं-जनिः, मृतिश्च जनिश्च मृतिजनी, रोदस्या-द्यावाभूमेर्मृतिजनी रोदसीमृतिजनी गमयति-अत्यन्ताभावं प्रापयति । "द्यावाभूमी(म्योः ?)तु रोदसी" इति हैमः ( का० ६, श्लो० १६२ ) । तदुपासनात् पुनः संसारे जन्ममरणाभाव इति सङ्केतः ॥ २३ ॥

## अन्वयः

( हे ) सु-तनु ! ( हे ) साध्वि ! यः रोदसी-मृति-जनी गमयति, सः एव त्वया आदि-पुरुषं उपास्य पूर्वं पृथिव्यां प्रथितः स-दयः शिवः शिव-पदस्य मुनि-इन्द्र-पन्थाः अस्ति, न अन्यः ( इति अहं ) जाने ।

## શબ્દાર્થ

यः ( मू० यद् )=જે.
रोदसी=સ્વર્ગ અને પૃથ્વી.
मृति=મરણ.
जनि=જન્મ.
रोदसीमृतिजनी=સ્વર્ગનાં અને પૃથ્વીનાં મરણ અને જન્મને.
गमयति ( धा० गम् )=નાશ કરે છે.
उपास्य ( धा० आस् )=સેવા કરીને.

શ્રીમદ્વિજયાનન્દસૂરીશ્વરના પટ્ટધર શ્રીમદ્વિજયકમલસૂરિરાજના
પ્રથમ પટ્ટધર જ્યોતિઃશાસ્ત્રવિશારદ શ્રીવિજયદાનસૂરિનો

# અભિપ્રાય.

શ્રીવીરભક્તામર તથા શ્રીનેમિભક્તામરનાં ગંભીર કાવ્યોના ભાષાંતરકાર શ્રીમાન્ પ્રોફેસર હીરાલાલ રસીકદાસે પોતાના પ્રસ્તુત શ્રમ માટે અમારા અભિપ્રાયની ઇચ્છા દર્શાવી છે.

પૂર્વનાં કાવ્યોની માફક આ શ્રીસરસ્વતીભક્તામર, શ્રીશાંતિભક્તામર તથા શ્રીપાર્શ્વભક્તામર કાવ્યોના ભાષાંતરમાં પણ તેમણે સારામાં સારી સફળતા પ્રાપ્ત કરી છે એ કહેવાની ભાગ્યેજ જરૂર હોય. અત્રે સૂત્રો તથા મતાંતરોની બાબતમાં કેટલીક વખત સ્મરણમાં રહેવા જોઇતા વિવેકની આવશ્યકતા બાબત સામાન્ય ઇસારો કરવો અસ્થાને નહિ ગણાય. તે એ છે કે આ ગ્રન્થમાં સ્પષ્ટીકરણમાં અનુવાદકે સૂત્રોના ઉલ્લેખ કરેલા હોવાથી સૂત્રો વાંચવાની ગૃહસ્થોને છૂટ છે એમ સમજવાનું નથી તેમજ મતાંતરની બાબતમાં દિગંબર મતનો જે આ ગ્રંથમાં ઉલ્લેખ કરવામાં આવ્યો છે તે ઉપરથી તે પણ ખાસ એક વજન આપવા લાયક મૌલિક સિદ્ધાન્ત છે એમ સમજવાની ભૂલ થવી ન જોઈએ.

ગુજરાતી વાંચનારાઓ, મૂળ સંસ્કૃત કૃતિઓના રસાસ્વાદથી જે વંચિત રહેત, તેઓ આ ભાષાંતરથી એના ભોક્તા બની આત્મશ્રેય માટે ઘણીજ સહેલાઇ યાને સરળતાથી લાભ ઉઠાવી શકશે એમાં શંકા નથી.

પુસ્તક પ્રકાશનમાં સંસ્થાએ કાગળ તથા છપાઇ વિગેરે ઉંચા પ્રકારનાં વાપર્યાં છે. તે જોતાં કીંમત ઓછી ગણાય. આથી સામાન્ય જનસમાજને ઉપકાર કરવામાં તે વધુ શક્તિમાન નીવડશે એમ મનાય છે.

**ખંભાત.**
વિક્રમ સંવત્ ૧૯૮૩
આષાઢ કૃષ્ણ એકાદશી.

વિજયદાનસૂરિ

जाने ( धा० ज्ञा )=હું જાણું છું, હું વિચારૂં છું.
सः ( मू० तद् )=તે.
एव=જ.
सु=સુન્દરતાવાચક અવ્યય.
तनू=દેહ.
सुतनु !=હે શોભન છે દેહ જેનો એવી ! (સં૦)
प्रथितः ( मू० प्रथित )=વિસ્તારેલ.
पृथिव्यां ( मू० पृथ्वी )=પૃથ્વીને વિષે.
पूर्वे=પહેલાં.
त्वया ( मू० त्वद् )=તારાથી.
आदि=શરૂઆત.
पुरुष=પુરૂષ.
आदिपुरुषं=આદીશ્વરને, ઋષભનાથને.
दया=કૃપા.
सदयः ( मू० सदय )=કૃપાયુક્ત.
अस्ति ( धा० अस् )=છે.
साध्वि ! ( मू० साध्वी )=હે સાધ્વી !
अन्यः ( मू० अन्य )=બીજો, અપર.
शिवः ( मू० शिव )=કલ્યાણકારી.
शिव=મોક્ષ.
पद=સ્થાન.
शिवपदस्य=મોક્ષ-સ્થાનનો.
मुनीन्द्र=મુનીશ્વર, સર્વજ્ઞ.
पथिन्=માર્ગ.
मुनीन्द्रपन्थाः=મુનીશ્વરોનો માર્ગ.

## પદ્યાર્થ

" જેનું શરીર સુંદર છે એવી હે ( **સરસ્વતી** ) ! હે ( સંયમાદિક ગુણે કરીને મોક્ષને સાધનારી ) સાધ્વી ! જે સ્વર્ગ અને પૃથ્વી (વિષે)નાં જન્મ અને મરણનો સર્વથા અંત આણે છે, તેજ તેં **આદીશ્વર**ની પૂર્વે ઉપાસના કરીને પૃથ્વીને વિષે વિસ્તારેલો એવો તથા કૃપાયુક્ત અને ( તેમ હોઇ કરીને ) કલ્યાણકારી શિવ-પદનો કેવલીઓએ ( બતાવેલો ) માર્ગ છે. ( એ સિવાય મોક્ષનો ) કોઇ અન્ય માર્ગ નથી એમ હું વિચારૂં છું. "—૨૩

* * * * *

दीव्यद्दयानिलयमुन्मिषदक्षिपद्मं
पुण्यं प्रपूर्णहृदयं वरदे ! वरेण्यम् ।
त्वद्भूघनं सघनरश्मि महाप्रभावं
ज्ञानस्वरूपममलं प्रवदन्ति सन्तः ॥ २४ ॥

## टीका

हे 'वरदे !' वरं ददातीति वरदा तत्संबोधनं हे वरदे ! सन्तः–पण्डिताः त्वद्भूघनं–तव भूघनं–शरीरं त्वद्भूघनं अमलं–निर्मलं अविद्यमानमलं अमलं–निरावरणं ज्ञानस्वरूपं–ज्ञानमयं प्रवदन्ति–कथयन्ति ज्ञानमेव स्वरूपं–स्वभावो यस्य तत् ज्ञानस्वरूपं, चिद्रूपमित्यर्थः । किंविशिष्टं त्वद्भूघनं ? दीव्यन्ती–क्रीडन्ती[1] दया–कृपा तस्या निलयं–गृहं यत् तद् दीव्यद्दयानिलयम् । पुनः किंविशिष्टं त्वद्भूघनं ? 'उन्मिषदक्षिपद्मं' उन्मिषती–विकाशमाने अक्षिपद्मे–नेत्रकमले यस्मिंस्तदुन्मिषदक्षिपद्मम् । पुनः किंविशिष्टं त्वद्भूघनं ? पुण्यं–पवित्रम् । पुनः किंविशिष्टं त्वद्भूघनं ? 'प्रपूर्णहृदयं' प्रकर्षेण पूर्णं–भृतं ग्रन्थकोटीभिर्हृदयं यस्य तत् प्रपूर्णहृदयम् । पुनः किंविशिष्टं त्वद्भू-

१ 'क्रीडमानाः' इति ख-पाठः ।

# વિષયાનુક્રમણિકા.

घनं ? वरेण्यं-अतिश्रेष्ठम् । पुनः किंविशिष्टं त्वद्भूघनं ? 'सघनरश्मि' सघनाः-सान्द्रा रश्मयः-किरणा यस्य तत् सघनरश्मि । पुनः किंविशिष्टं त्वद्भूघनं ? 'महाप्रभावं' महान् प्रभावः-प्रतापो यस्य तत् महाप्रभावम् ॥ २४ ॥

### अन्वयः

( हे ) वर-दे ! सन्तः दीव्यत्-दया-निलयं उन्मिषत्-अक्षिन्-पद्मं पुण्यं प्रपूर्ण-हृदयं वरेण्यं स-घन-रश्मि महत्-प्रभावं त्वत्-भूघनं अ-मलं ज्ञान-स्वरूपं प्रवदन्ति ।

### શબ્દાર્થ

**दीव्यत्** ( ધા० दिव् )=ક્રીડા કરનાર.
**दया**=કૃપા.
**निलय**=ગૃહ.
**दीव्यद्दयानिलयं**=ક્રીડા કરતી કૃપાના ગૃહ ( રૂપ ).
**उन्मिषत्** ( ધા० मिष् )=વિકસ્વર.
**अक्षिन्**=નેત્ર.
**पद्म**=કમલ.
**उन्मिषदक्षिपद्मं**=વિકસ્વર છે નેત્ર-કમલ જેને વિષે એવા.
**पुण्यं** ( મૂ० पुण्य )=પવિત્ર.
**प्रपूर्ण** ( ધા० पृ )=ભરપૂર.
**हृदय**=હૃદય, અંતઃકરણ.
**प्रपूर्णहृदयं**=ભરપૂર છે હૃદય જેનું એવા.
**वरदे** ! ( મૂ० वरदा )=હે વરદાન દેનારી !
**वरेण्यं** ( મૂ० वरेण्य )=અતિશય ઉત્તમ.
**भूघन**=શરીર, દેહ.
**त्वद्भूघनं**=તારા દેહને.
**घन**=નિબિડ, ખીચોખીચ.
**रश्मि**=કિરણ.
**सघनरश्मि**=નિબિડ છે કિરણો જેને વિષે એવા.
**महत्**=ઘણો.
**प्रभाव**=પ્રતાપ.
**महाप्रभावं**=મહાન્ છે પ્રતાપ જેનો એવા.
**ज्ञान**=જ્ઞાન.
**स्वरूप**=સ્વરૂપ.
**ज्ञानस्वरूपं**=જ્ઞાન-સ્વરૂપી.
**मल**=મેલ.
**अमलं** ( મૂ० अमल )=નિર્મળ.
**प्रवदन्ति** ( ધા० वद् )=કહે છે.
**सन्तः** ( મૂ० सत् )=પણ્ડિતો.

### પદ્યાર્થ

" હે વરદાન દેનારી ( **સારદા** ) ! ક્રીડા કરતી કૃપાના નિવાસ-સ્થાનરૂપ ( અર્થાત્ અતિશય દયાળુ ), વળી જેને વિષે વિકસ્વર નેત્ર-કમલો છે એવા તથા પવિત્ર, તેમજ જેનું હૃદય ( અનેક ગ્રન્થો વડે ) પરિપૂર્ણ છે એવા, વળી અતિશય શ્રેષ્ઠ, તથા વળી નિબિડ કિરણોથી યુક્ત તેમજ મહાપ્રભાવશાળી એવા તારા દેહને પણ્ડિતો નિર્મળ જ્ઞાનસ્વરૂપી કહે છે."—૨૪

* * * *

कैवल्यमात्मतपसाऽखिलविश्वदर्शि
चक्रे ययाऽऽदिपुरुषः प्रणयां प्रमायाम् ।
जानामि विश्वजननीति च देवते ! सा
व्यक्तं त्वमेव भगवन् पुरुषोत्तमोऽसि ॥ २५ ॥

વડોદરાની સેન્ટ્રલ લાઇબ્રેરીના જૈન પણ્ડિતવર્ય ઇતિહાસજ્ઞ
**શ્રીયુત લાલચન્દ્ર ભગવાનદાસ ગાંધીનો**

# અભિપ્રાય

ભક્તામરસ્તોત્રની પાદપૂર્તિરૂપ કાવ્યસંગ્રહનો દ્વિતીય વિભાગ.

સંશોધન, ભાષાંતર તથા વિવેચન કરનાર પ્રો. **હીરાલાલ રસિકદાસ કાપડિયા** એમ. એ.
પ્રસિદ્ધકર્તા આગમોદયસમિતિ તરફથી શ્રીયુત **જીવણચંદ સાકરચંદ ઝવેરી**, મુંબાઇ.

જૈન કવિ **માનતુંગ**સૂરિનું 'ભક્તામર' નામથી પ્રખ્યાત સ્તોત્રકાવ્ય, કવિ **કાલિદાસ**ના મેઘદૂતની જેમ વિદ્વાનોમાં અતિપ્રિય થયેલું જોવાય છે. મંત્રગર્ભિત એ ચમત્કારિક સ્તોત્રને 'બૃહજ્જ્યોતિષાર્ણવ' જેવા જૈનેતર વિદ્વાનના ગ્રંથમાં પણ આમ્નાય તથા યંત્રમંડલ સાથે સ્થાન મળ્યું છે. અનેક વિદ્વાનોએ આ સ્તોત્ર પર ટીકા, અવચૂરિ, બાલાવબોધ, ટબા અને અનુવાદો રચ્યા છે. અનેક કવિઓએ એ કાવ્યપર મુગ્ધ થઇ એનાં ચરણો સ્વીકારી એની અનુકૃતિરૂપે અભીષ્ટ વિષયોમાં સમસ્યાપૂર્તિ-પાદપૂર્તિરૂપ કાવ્યો રચ્યાં છે; જેમાંના **વીર**ભક્તામર અને **નેમિ**ભક્તામર, આજ સંસ્થા તરફથી પ્રકાશિત થયેલા કાવ્યસંગ્રહના પ્રથમ વિભાગમાં પ્રસિદ્ધ થઇ ગયેલ છે.

આ દ્વિતીય વિભાગમાં **ધર્મસિંહ**સૂરિનું સ્વોપજ્ઞ ટીકા સાથે **સરસ્વતી**-ભક્તામર, **લક્ષ્મીવિમલ**મુનિનું **શાંતિ**ભક્તામર અને **વિનયલાભ**ગણિનું **પાર્શ્વ**ભક્તામર; પ્રો. **હીરાલાલ કાપડિયા**ના કુશલતાભર્યાં સંશોધન, ભાષાંતર તથા વિવેચન સાથે દૃષ્ટિગોચર થાય છે.

અભ્યાસીઓને સરલતાથી ઉપયોગી થઈ શકે તે દૃષ્ટિએ અન્વય, શબ્દાર્થ, પદ્યાર્થ અને સ્પષ્ટીકરણાદિ પ્રશંસનીય પદ્ધતિથી ભાષાંતરનું કાર્ય થયું છે. પ્રસ્તાવના, પરિશિષ્ટો, કિંચિદ્વક્તવ્ય, આમુખ દ્વારા આ ગ્રંથને આકર્ષક બનાવવા બહુ પરિશ્રમ લીધો છે એમ સહજ ખ્યાલમાં આવી શકે તેમ છે.

સ્પષ્ટીકરણમાં ગ્રહવિચાર, નક્ષત્રવિચાર, કંદર્પવિચાર, યોનિવિચાર, પ્રલયવિચાર, નિગોદવિચાર, વ્યાકરણ-પ્રયોગવિચાર, અઢાર લિપિઓ, કોઢના અઢાર પ્રકાર, ધર્મના દશ પ્રકાર, અનંગદર્જયાષ્ટક, દેવદિગ્દર્શન, મહાદેવની મુખ્યતા, લોકાંતિક દેવો, ઈશ્વરના ગુણોની ગણના, સરસ્વતીનાં નામો, મૂર્છના, કોપકદર્થન, રાગ-દ્વેષની સત્તા, પ્રાતિહાર્ય-પર્યાલોચન, પારણક-પરામર્શ, કવિસમય, કવીશ્વરો એ વિગેરે વિષયોને અન્યાન્ય સાધનોથી પુષ્ટ કરી ભાષાંતરકારે અમુક અંશે ભાષ્ય જેવું કાર્ય બજાવી ગ્રંથનું ગૌરવ વધાર્યું છે.

સ્પષ્ટીકરણમાં ક્વચિત્ સ્ખલના નજરે ચડે છે. જેમકે—પૃ. ૧૫માં 'કવીશ્વરો' સંબંધી જણાવતાં "શ્રીપદ્મસાગરગણિકૃત **હીરસૌભાગ્ય**, શ્રીવલ્લભગણિકૃત **વિજયપ્રશસ્તિ**" એવો ઉલ્લેખ કર્યો છે; તે, જૈનગ્રંથાવલી (જૈન શ્વે. કો. ઑ. મુંબઇથી પ્રકાશિત)માં થયેલી ભૂલની નકલરૂપે ઉતરી આવેલ જણાય છે. વાસ્તવિક રીતે તપાસ કરતાં જાણી શકાય તેમ છે કે—શ્રીહર્ષના

## टीका

हे देवते ! दीव्यति–क्रीडति परमानन्दपदे इति देवस्तस्य भावे ताप्रत्ययः, तान्तः स्त्रियां देवता तत्सम्बोधनं हे देवते ! अहं यां विश्वजननीति जानामि । अन्योक्ते प्रथमेति सूत्राद् द्वितीया-स्थाने प्रथमा इति योगे विश्वजननीं इति विश्वजननीति शब्दः "क्रमादमुं नारद इत्यबोधि सः" ( माघे स० १, श्लो० ३ ) इति महाकविप्रयोगदर्शनाचाह । अहं यां विश्वमातरं वेद्मि, व्यक्तं–प्रकटं सा त्वमेव विश्वमाताऽसि–वर्तसे । पुनः सा का ? यया त्वया आदिपुरुषः–आदिदेवः प्रणयांचक्रे–सस्नेहीकृतः, आदौ पुरुष आदिपुरुषः, हस्तावलम्बनेन जगद्विधिप्रवर्तको विदधे । च–पुनः यया त्वया 'कैवल्यं' केवलज्ञानस्य भावः कैवल्यं त्वया प्रणयांचक्रे–स्ववशं कृतम् । कस्यां ? प्रमायां–सत्यज्ञाने, यथार्थानुभवः प्रमा तस्याम् । केन ? 'आत्मतपसा' आत्मनस्तप आत्मतपस्तेन आत्मतपसा–निजदेहजनितानुष्ठानेन । किंविशिष्टं कैवल्यं ? 'अखिलविश्वदर्शि' अखिलं विश्वं पश्यती-त्येवंशीलं अखिलविश्वदर्शि । पुनः किंविशिष्टं कैवल्यं ? 'भगवन्' भगो–माहात्म्यं अस्यास्तीति भगवन्–बहुमहिम । किंविशिष्ट आदिपुरुषः ? 'पुरुषोत्तमः' पुरुषेषूत्तमः पुरुषोत्तमः, प्रधानपुरुष इति ॥ २५ ॥

## अन्वयः

( हे ) देवते ! यया ( त्वया ) पुरुष-उत्तमः आदि-पुरुषः अखिल-विश्व-दर्शि भगवन् कैवल्यं च आत्मन्-तपसा प्रमायां प्रणयांचक्रे यां ( च ) विश्व-जननी इति जानामि, व्यक्तं सा त्वं एव असि ।

## શબ્દાર્થ

कैवल्यं ( मू० कैवल्य )=કેવલજ્ઞાનતા.
आत्मन्=આત્મા.
तपस्=તપશ્ચર્યા.
आत्मतपसा=પોતાના તપ વડે.
अखिल=સમસ્ત.
विश्व=બ્રહ્માણ્ડ.
दर्शिन्=જોનાર.
अखिलविश्वदर्शि=સમસ્ત બ્રહ્માણ્ડને જોનારૂં.
प्रणयांचक्रे=(૧) સ્નેહી બનાવ્યા; (૨) પોતાને વશ કર્યાં.
यया ( मू० यद् )=જેના વડે.
आदिपुरुषः=આદીશ્વર.
प्रमायां ( मू० प्रमा )=સત્ય જ્ઞાનને વિષે.
जानामि ( धा० ज्ञा )=હું જાણું છું.
जननी=માતા.
विश्वजननी=જગદંબા, જગત્‌ની માતા.
इति=એમ.
च=અને.
देवते ! ( मू० देवता )=હે દેવતા !
सा ( मू० तद् )=તે.
व्यक्तं=સ્પષ્ટ.
त्वं ( मू० युष्मद् )=તું.
एव=જ.
भगवन्=મહિમાથી યુક્ત.
पुरुष=પુરૂષ.
उत्तम=શ્રેષ્ઠ.
पुरुषोत्तमः=પુરૂષોને વિષે શ્રેષ્ઠ.
असि ( धा० अस् )=તું છે.

## પદ્યાર્થ

" હે દેવી ! જેણે પુરૂષોને વિષે ઉત્તમ એવા આદિ–પુરૂષ ( ઋષભદેવ ) ને સ્નેહી બનાવ્યા ( અર્થાત્ હસ્તના આલંબન વડે જગત્‌ની વિધિના સંચાલક બનાવ્યા ) તેમજ જેણે પોતે તપ

१ 'तातां स्त्रियां' इति ख–पाठः । २ चन्द्रिकायाम् । ३ इदं चिन्त्यम् ।

નૈષધીયચરિત મહાકાવ્ય સાથે સ્પર્ધા કરતું હીરસૌભાગ્ય મહાકાવ્ય, પં. દેવવિમલગણિએ સ્વોપજ્ઞ ટીકા સાથે રચેલું છે, જે નિર્ણયસાગર પ્રેસ દ્વારા વર્ષો થયાં સુપ્રસિદ્ધ છે. અને કવિ કાલિદાસના રઘુવંશ કાવ્ય સાથે સ્પર્ધા કરતું વિજયપ્રશસ્તિ કાવ્ય, પં. હેમવિજયગણિએ સોળ સર્ગ સુધી અને અપૂર્ણ રહેલું (૧૭ થી ૨૧ સર્ગ પર્યંત) ટીકાકાર ગુણવિજયગણિએ પૂર્ણ કર્યું હતું. એ કાવ્ય પણ યશોવિજય જૈનગ્રંથમાળા દ્વારા વર્ષોથી પ્રસિદ્ધ છે. પદ્મસાગરગણિકૃત જગદ્ગુરુકાવ્ય છે, તે પણ એ સંસ્થા તરફથી પ્રકટ થયેલ છે અને શ્રીવલ્લભઉપાધ્યાયે રચેલું વિજયદેવમાહાત્મ્ય જાણવામાં આવેલ છે. જૈનેતર પંચમહાકાવ્યો સાથે સ્પર્ધા કરતાં બીજાં કાવ્યોનાં નામો પણ સૂચવી શકાય. જેમકે—જયશેખરસૂરિનું જૈનકુમારસંભવ, મહામાત્ય વસ્તુપાલનું નરનારાયણાનંદ, બાલચંદ્રસૂરિનું વસંતવિલાસ, મેરુતુંગસૂરિનું જૈનમેઘદૂત, કવિ હરિચંદ્રનું ધર્મશર્માભ્યુદય, કવિ વાગ્ભટનું નેમિનિર્વાણ, મુનિભદ્રસૂરિનું શાંતિનાથચરિત, અભયદેવસૂરિનું જયંતવિજય એ વિગેરે અનેક મહાકાવ્યો પ્રસિદ્ધિમાં આવ્યાં છે.

પૃ. ૧૭ માં 'શ્રીહર્ષ'નો પરિચય કરાવતાં જણાવ્યું છે કે—"કવિવર શ્રીહર્ષે નૈષધીયચરિત ઉપરાંત અન્ય કોઇ ગ્રન્થ રચ્યો હોય તો તે જોવામાં આવતો નથી." પરંતુ વિવેચક બંધુએ એ નૈષધીય ચરિતના જ ૪,૫,૬,૭,૯,૧૭,૧૮,૨૨ સર્ગના અંતિમ શ્લોક તરફ લક્ષ્ય આપ્યું હોત તો કવિવર શ્રીહર્ષના રચેલા ૧ સ્થૈર્યવિચારણપ્રકરણ (ક્ષણભંગનિરાકરણ), ૨ 'વિજયપ્રશસ્તિ, ૩ ખંડનખંડ, ૪ ગૌડોર્વીશકુલપ્રશસ્તિ, ૫ અર્ણવવર્ણન, ૬ છિન્દપ્રશસ્તિ, ૭ શિવભક્તિસિદ્ધિ, ૮ નવસાહસાંકચરિતચંપૂ એ ગ્રન્થોનાં નામો પણ સૂચવ્યાં હોત, જેમાંનો ખંડનખંડ ગ્રંથ સુપ્રસિદ્ધ છે.

આવી કેટલીક સ્ખલનાઓ સિવાય આ ગ્રંથને અત્યુત્તમ બનાવવા પ્રો. હીરાલાલે પ્રશંસાપાત્ર પ્રયત્ન કર્યો છે એમ કહેવું યુક્ત છે. શ્રીયુત જીવણચંદ સા. ઝવેરી જેવા સાહિત્યપ્રેમી શ્રીમાને આ ગ્રંથને આગમોદયસમિતિ દ્વારા પ્રસિદ્ધિમાં લાવી સાહિત્ય-સેવાના કાર્યમાં આવશ્યક પૂર્તિ કરી છે. પ્રવર્તક કાંતિવિજયજી મહારાજ જેવા મહાનુભાવને આ ગ્રંથ સમર્પિત કરી તેમની મૌન સાહિત્ય-સેવાની ઉચિત કદર કરી છે. મનોહર કાગળ અને છપાઇવાળા આ ગ્રંથની કિં. રૂ. ૩—૮ વધારે ન ગણાય.

બીજી સંસ્થાઓ આવાં કાર્યોનું અનુકરણ કરી અપ્રસિદ્ધ વિશાલ ઉત્તમોત્તમ જૈન વાઙ્મયને પ્રશસ્ત પદ્ધતિથી પ્રકાશમાં લાવવા વિશેષ પ્રયત્ન કરે તેમ ઇચ્છીએ છીએ.

વીર સં. ૨૪૫૪ માર્ગશીર્ષ શુ. ૧૫
ઘડીઆળી પોળ, વડોદરા.

લાલચંદ્ર ભગવાનદાસ ગાંધી.

---

૧ શુદ્ધિપત્રમાં ઉપર્યુક્ત બે સ્ખલનાઓ સુધારી લેવામાં આવી છે.

કરીને સમસ્ત વિશ્વને દેખનારી ( અર્થાત્ લોકાલોકપ્રકાશક ) તેમજ મહિમાયુક્ત એવી કેવલ-જ્ઞાનતાને પ્રમાણરૂપે સિદ્ધ કરી આપી તેમજ જેને હું જગદમ્બા જાણું છું, તે તું છે ( એમ ) સ્પષ્ટ ( જોઇ શકાય છે ). "—૨૫

## સ્પષ્ટીકરણ

**વ્યાકરણ-વિચાર—**

આ પદ્યમાંના કેટલાક પ્રયોગોનો વ્યાકરણની દૃષ્ટિએ વિચાર કરવો આવશ્યક છે, પરંતુ તે વાત પ્રસ્તાવનામાં વિચારવામાં આવનાર હોવાથી અત્ર તે વિષે કંઇ ઉલ્લેખ કરવામાં આવતો નથી.

* * * *

सिद्धान्त एधिफलदो बहुराज्यलाभो
न्यस्तो यया जगति विश्वजनीनपन्थाः ।
विच्छित्तये भवततेरिव देवि! मन्था-
स्तुभ्यं नमो जिनभवो दधिशोषणाय ॥ २६ ॥

## टीका

हे देवि! तस्यै तुभ्यं नमः । ययेतिसम्बन्धादनुक्तमपि तस्यैपदं गृहीतम् । तस्यै कस्यै ? यया त्वया लिपिरूपत्वेन एष सिद्धान्तः–द्वादशाङ्गप्रवचनरूपः न्यस्तः–स्थापितः । किंविशिष्टः सिद्धान्तः ? 'एधिफलदः' एधते–वर्धते इत्येवंशीलं एधि–वर्धमानं फलं ददातीति एधिफलदः, विशुद्धश्रुतिश्रद्धावशात् नृभवादमरत्वं, [1]देवात् ( च ) भवान्तरे मोक्ष इति फलवृद्धिः । पुनः किंविशिष्टः सिद्धान्तः ? 'बहुराज्यलाभः' बहु–प्रचुरं राज्यं राज्ञ इदं कर्म राज्यं तस्य लाभः, तच्छ्रद्धासहितश्रवणाच्चक्रीन्द्रसुरेन्द्रपदवीप्राप्तिर्यस्मात् स बहुराज्यलाभः । पुनः किंविशिष्टः सिद्धान्तः ? जगति–संसारे 'विश्वजनीनपन्थाः' विश्वजनेभ्यः–समस्तलोकेभ्यः हितो–हितकारी पन्था–मार्गो योऽसौ विश्वजनीनपन्थाः । पुनः किंविशिष्टः ( [2]अथवैष कः ) सिद्धान्तः ? 'जिनभवः' जिनेभ्यः–केवलिभ्यो भव–उत्पत्तिर्यस्य स जिनभवः, "अर्हद्वक्त्रप्रसूतं" ( बालचन्द्रकृतौ 'स्नातस्या' स्तुतौ ) इत्यसौ त्वया न्यस्तः । कस्यै किमर्थं ? 'भवततेः' भवानां–संसारजन्मनां ततिः–श्रेणिर्भवततिस्तस्या भवततेः विच्छित्तये–विनाशाय, तच्छ्रवणाद् भवभ्रमणं न भवतीत्यभिप्रायः । सिद्धान्तः क इव ? मन्था इव–मन्थनदण्ड इव । कस्मै किमर्थं ? 'दधिशोषणाय' दध्नः शोषणं दधिशोषणं तस्मै दधिशोषणाय लोकैर्यथा मन्थाः स्थापितः । किंविशिष्टो मन्थाः ? 'बहुराज्यलाभः' अत्र [3]रलयोः सावर्ण्यात् बहुलाज्यलाभ इति विशेषणं, बहुलं–प्रभूतं आज्यं–[4]घृतं तस्य लाभो यस्मात् स बहुलाज्यलाभः । अन्यानि विशेषणानि पूर्ववत् ॥ २६ ॥

---

१ 'दैवात्' इति क–पाठः । २ धनुश्चिह्नितोऽयं ख–पाठः ।

३ विचार्यताम्—

"रलयोर्डलयोश्चैव, शसयोर्बवयोस्तथा ।
वदन्त्येषां च सावर्ण्य–मलङ्कारविदो जनाः ॥"

—सारस्वते, श्लो० १८

४ 'घृतं लभते यस्मात्' इति ख–पाठः ।

# વિષય-દિગ્દર્શન

વિષય — સરસ્વતી-ભક્તામર — પૃષ્ઠાંક



## શાન્તિ-ભક્તામર

## अन्वयः

( हे ) देवि ! यया ( त्वया ) ( एषः ) एधिन्-फलदः बहु-राज्य-लाभः जगति विश्व-जनीन-पन्थाः जिन-भवः दधि-शोषणाय बहुल-आज्य-लाभः मन्थाः इव सिद्धान्तः भव-ततेः विच्छित्तये न्यस्तः, ( तस्यै ) तुभ्यं नमः ।

## શબ્દાર્થ

सिद्धान्तः ( मू० सिद्धान्त )=સિદ્ધાન્ત, પ્રવચન, આગમ.
एधिन्=વધતું, વર્ધમાન.
फल=ફળ.
दा=આપવું.
एधिफलदः=વધતા ફળને આપનારો.
बहु=ઘણા.
राज्य=રાજ્ય.
लाभ=પ્રાપ્તિ.
बहुल=ઘણા.
आज्य=ઘૃત, ઘી.
बहुराज्यलाभः=(૧) ઘણાં રાજ્યનો લાભ છે જેથી એવો; (૨) ઘણા ઘીની પ્રાપ્તિ છે જેથી એવો.
न्यस्तः ( मू० न्यस्त )=સ્થાપન કરાયેલો.
यया ( मू० यद् )=જેનાથી.
जगति ( मू० जगत् )=જગતમાં.
विश्व=સમસ્ત.
जनीन=લોકને હિતકારી.
पथिन्=માર્ગ.
विश्वजनीनपन्थाः=સમસ્ત લોકને હિતકારી એવા માર્ગ (૩૫).
विच्छित्तये ( मू० विच्छित्ति )=વિચ્છેદને માટે, વિનાશાર્થે.
भव=સંસાર.
तति=શ્રેણિ.
भवततेः=સંસારની શ્રેણિના.
इव=જેમ.
देवि ! ( मू० देवी )=હે દેવી !
मन्थाः ( मू० मथिन् )=રવૈયો, દહીં વલોવવાનો દણ્ડ.
तुभ्यं ( मू० युष्मद् )=તને.
नमस्=નમસ્કાર.
जिन=તીર્થંકર.
भव=ઉત્પત્તિ.
जिनभवः=તીર્થંકર દ્વારા ઉત્પત્તિ છે જેની એવો.
दधि=દહીં.
शोषण=શોષવું તે.
दधिशोषणाय=દહીંના શોષણાર્થે.

## પદ્યાર્થ

" હે દેવી ! જેનું ફળ વધતું જાય છે એવો, વળી જે દ્વારા ઘણાં રાજ્યનો લાભ છે એવો, તથા જગતમાં સમસ્ત લોકને હિતકારી એવા માર્ગરૂપ, તેમજ તીર્થંકર દ્વારા જેની ઉત્પત્તિ છે એવો તથા વળી દહીંના શોષણાર્થે અતિશય ઘૃતની પ્રાપ્તિ કરાવનારા એવા મન્થન-દણ્ડ જેવો ( આ ) સિદ્ધાન્ત ભવોની શ્રેણિના ઉચ્છેદ માટે જે (તારા)થી સ્થાપન કરાયો, તે તને નમસ્કાર હોજો."—૨૬

* * * *

मध्याह्नकालविहृतौ सवितुः प्रभायां
सैवेन्दिरे ! गुणवती त्वमतो भवत्याम् ।
दोषांश इष्टचरणैरपरैरभिज्ञैः
स्वप्नान्तरेऽपि न कदाचिदपीक्षितोऽसि ॥ २७ ॥

## टीका

हे इन्दिरे !–हे लक्ष्मि ! इन्दति–परमैश्वर्येण राजते इति इन्दिरा सर्वगुणसम्पूर्णा नाम्नामानन्त्यात् ( तस्याः ) सम्बोधनं हे इन्दिरे !–हे कमले ! सर्वेषां सम्पत्प्रदे ! सैव त्वं गुणवती–बहुगु-

| વિષય | પૃષ્ઠાંક |
|---|---|
| **શાન્તિ-ભક્તામર** | |

णयुताऽसि–वर्तसे। अतः कारणात् 'इष्टचरणैः' इष्टं–प्रियं चरणं–चारित्रं येषां ते तैः इष्टचरणैः–मुनिभिः अभिज्ञैः–चतुरैरपरैः–अन्यैः अन्यतीर्थिकैः–कुलिङ्गिभिरपि भवत्यां–त्वयि कदाचित् स्वप्नान्तरेऽपि–निद्रावशे स्वप्नमध्येऽपि दोषांशः–अगुणलेशः नेक्षितो–न विलोकितो–न दृष्टः। भवत्यां कस्यामिव? सवितुः–सूर्यस्य प्रभायामिव–कान्तौ इव, यथाऽभिज्ञैः सूर्यप्रभायां 'दोषांशः' दोषा–रात्रिस्तस्या अंशो–लेशोऽपि न प्राप्यते। किंविशिष्टायां प्रभायां? 'मध्याह्नकालविहृतौ' अह्नो मध्यं मध्याह्नः स चासौ कालश्च मध्याह्नकालस्तस्मिन् मध्याह्नकाले विहृतिः–विहरणं यस्याः सा मध्याह्नकालविहृतिस्तस्यां मध्याह्नकालविहृतौ, मध्याह्नवेलायां सर्वथा दोषाभावस्तद्वत् त्वय्यपि॥ २७॥

### अन्वयः

(हे) इन्दिरे! सा एव त्वं गुणवती असि, अतः इष्ट-चरणैः अभिज्ञैः अपरैः अपि सवितुः मध्य-अहन्-काल-विहृतौ प्रभायां दोषा-अंशः (इव) भवत्यां दोष-अंशः स्वप्न-अन्तरे अपि न कदाचित् ईक्षितः।

### શબ્દાર્થ

मध्य=મધ્ય.
अहन्=દિવસ.
काल=સમય.
विहृति=વિહરણ.
मध्याह्नकालविहृतौ=મધ્યાહ્ન સમયે વિહરણ છે જેનું એવી.
सवितुः (मू० सवितृ)=સૂર્યની.
प्रभायां (मू० प्रभा)=પ્રભાને વિષે, કાન્તિને વિષે.
सा (मू० तद्)=તે.
एव=જ.
इन्दिरे! (मू० इन्दिरा)=હે ઇન્દિરા, હે લક્ષ્મી!
गुणवती (मू० गुणवत्)=ગુણવાળી.
त्वं (मू० युष्मद्)=તું.
अतस्=એથી કરીને.
भवत्यां (मू० भवती)=આપશ્રીને વિષે.
दोषा=રાત્રિ.
दोष=અવગુણ.
अंश=અંશ, લેશ.
दोषांशः=(૧) રાત્રિનો લેશ; (૨) અવગુણનો અંશ.
इष्ट=પ્રિય.
चरण=ચારિત્ર.
इष्टचरणैः=પ્રિય છે ચારિત્ર જેમનું એવા.
अपरैः (मू० अपर)=અન્ય.
अभिज्ञैः (मू० अभिज्ञ)=ચતુર.
स्वप्न=સ્વપ્ન.
अन्तर=મધ્ય.
स्वप्नान्तरे=સ્વપ્નના મધ્યમાં.
अपि=પણ.
न=નહિ.
कदाचित्=કદાપિ.
ईक्षितः (मू० ईक्षित)=જોવાયેલો.
असि (धा० अस्)=તું છે.

### પદ્યાર્થ

"હે ઇન્દિરા! તેજ તું ગુણયુક્ત છે, એથી કરીને તો જેમ મધ્યાહ્ન સમયે વિહરણવાળા સૂર્યના તેજને વિષે રાત્રિનો લેશ પણ જોવામાં આવતો નથી, તેમ તારે વિષે પણ જેમનું ચારિત્ર પ્રિય છે એવા (અર્થાત્ મુનિવરો) વડે તેમજ અન્ય (અજૈન) ચતુર (જનો) વડે પણ સ્વપ્નાન્તરમાં પણ કદાપિ અવગુણનો લેશ પણ જોવાયો નથી."—૨૭

* * * *

# स्पष्टीकरणसाधनीभूतग्रन्थानां सूची

( સ્પષ્ટીકરણમાં સાધનરૂપ ગ્રન્થોની સૂચી )

| जैनग्रन्थाः | प्रणेतारः |
|---|---|
| जम्बूद्वीपप्रज्ञप्तिः | गणधरः |
| जम्बूद्वीपप्रज्ञप्तिवृत्तिः | श्रीशान्तिचन्द्रगणिः |
| जीवाजीवाभिगमवृत्तिः | श्रीमलयगिरिसूरिः |
| प्रज्ञापनासूत्रम् | श्रीश्यामाचार्यः |
| भगवतीसूत्रम् | गणधरः |
| समवायाङ्गवृत्तिः | श्रीअभयदेवसूरिः |
| सूर्यप्रज्ञप्तिः | गणधरः |
| विशेषावश्यकभाष्यटीका | मलधारिश्रीहेमचन्द्रसूरिः |
| प्रश्नव्याकरणम् | गणधरः |
| बृहत्सङ्ग्रहिणीटीका | श्रीमलयगिरिसूरिः |
| तत्त्वार्थराजवार्तिकम् | श्रीअकलङ्कदेवाचार्यः |
| अभिधानराजेन्द्रकोपः | श्रीविजयराजेन्द्रसूरिः |
| योगशास्त्रम् | श्रीहेमचन्द्रसूरिः |
| अभिधानचिन्तामणिः | ,, |
| त्रिपष्टिशलाकापुरुषचरित्रम् ( दशमं पर्व ) | ,, |
| काव्यानुशासनवृत्तिः | ,, |
| प्रबन्धचिन्तामणिः | श्रीमेरुतुङ्गसूरिः |
| चतुर्विंशतिप्रबन्धः | श्रीराजशेखरसूरिः |
| विचारसारप्रकरणम् | श्रीप्रद्युम्नसूरिः |
| श्रीअर्बुदमण्डनश्रीयुगादिदेव-श्रीनेमिनाथस्तवनम् | श्रीभुवनसुन्दरसूरिः |
| जीवविचारः | श्रीशान्तिसूरिः |
| जीवविचारवृत्तिः | श्रीपाठकरत्नाकरः |
| तिलकमञ्जरी | महाकविश्रीधनपालः |
| ऋपभपञ्चाशिकाटीका | श्रीप्रभानन्दसूरिः |
| सोपारकस्तवनम् | पूर्वाचार्यः |

हारान्तरस्थमयि ! कौस्तुभमत्र गात्र–
शोभां सहस्रगुणयत्युदयास्तगिर्योः ।
वन्द्याऽस्यतस्तव सतीमुपचारि रत्नं
बिम्बं रवेरिव पयोधरपार्श्ववर्ति ॥ २८ ॥

### टीका

हे इन्दिरे ! अयि इति कोमलामन्त्रणे अतः–अस्मात् कारणात् त्वं वन्द्याऽसि–वन्दितुं–स्तोतुं योग्या वन्द्या वर्तसे । अत इति किं ? अत्र–त्वयि विषये कौस्तुभं रत्नं गात्रशोभां–शरीरशोभां सहस्रगुणयति, सहस्रगुणं करोतीति सहस्रगुणयति । किंविशिष्टं कौस्तुभं ? 'हारान्तरस्थं' हारस्य अन्तरे–मध्ये तिष्ठतीति हारान्तरस्थं, हारमध्ये प्रोतमिति । पुनः किंविशिष्टं कौस्तुभं ? तव–भवत्याः पयोधरपार्श्ववर्ति पयोधरयोः–कुचयोः पार्श्वे वर्तत इत्येवंशीलं पयोधरपार्श्ववर्ति । किंविशिष्टां गात्रशोभां ? सतीं–विद्यमानां, नित्यवर्तिनीमिति । कौस्तुभं किमिव ? रवेः–सूर्यस्य बिम्बं इव, वर्तुलत्वात् साम्यम् । किंविशिष्टं रवेर्बिम्बं ? 'उदयास्तगिर्योः' गिरिशब्दः प्रत्येकं संबद्धः, उदयगिरिश्चास्तगिरिश्च उदयास्तगिरी तयोरुदयास्तगिर्योः उप–समीपे चरति–गच्छतीति उपचारि–समीपगामि । कौस्तुभस्योष्णांशुमण्डलोपमानं, पयोधरयोरुदयास्ताचलयोरुपमानमिति ॥ २८ ॥

### अन्वयः

अयि ! अत्र ( त्वयि ) तव पयोधर–पार्श्व–वर्ति हार–अन्तर–स्थं कौस्तुभं रत्नं रवेः उदय–अस्त–गिर्योः उप-चारि बिम्बं इव ( तव ) सतीं गात्र–शोभां सहस्रगुणयति, अतः त्वं वन्द्या असि ।

### શબ્દાર્થ

हार=હાર.
अन्तर=મધ્ય.
स्था=રહેવું.
हारान्तरस्थं=હારના મધ્યમાં રહેલું.
अयि=કોમલ આમન્ત્રણસૂચક અવ્યય.
कौस्तुभं ( मू० कौस्तुभ )=કૌસ્તુભ, એક જાતનું મણિ.
अत्र=અહિંઆ.
गात्र=દેહ, શરીર.
शोभा=શોભા.
गात्रशोभां=શરીરની શોભાને.
सहस्र=હજાર.
गुण्=ગુણવું.
सहस्रगुणयति=હજારગણી કરે છે.
उदय=ઉદય.
अस्त=અસ્ત.
गिरि=પર્વત.
उदयास्तगिर्योः=ઉદયાચળ અને અસ્તાચળની.
वन्द्या ( मू० वन्द्य )=વન્દન કરવા યોગ્ય.
असि ( धा० अस् )=છે.
अतः=એથી કરીને.
तव ( मू० युष्मद् )=તારૂં.
सतीं ( मू० सती )=વિદ્યમાન, હૈયાત.
उपचारि ( मू० उपचारिन् )=સમીપ જનારૂં.
रत्नं ( मू० रत्न )=રત્ન, મણિ.
बिम्बं ( मू० बिम्ब )=મણ્ડળ.
रवेः ( मू० रवि )=સૂર્યનું.
इव=જેમ.
पयोधर=સ્તન.
पार्श्व=સમીપ.
वर्तिन्=હોનારૂં.
पयोधरपार्श्ववर्तिन्=સ્તનની સમીપ રહેનારૂં.

| जैनग्रन्थाः | प्रणेतारः |
| --- | --- |
| पार्श्वनाथप्रातिहार्यस्तोत्रम् | श्रीजिनप्रभसूरिः |
| सिन्दूरप्रकरः (सूक्तमुक्तावली) | शतार्थिकश्रीसोमप्रभसूरिः |
| जिनशतकम् | श्रीसमन्तभद्रसूरिः |
| शब्दरत्नाकरः | श्रीसाधुसुन्दरगणिः |
| वैद्यकहितोपदेशः | श्रीकण्ठसूरिः |
| लोकप्रकाशः | श्रीविनयविजयगणिः |
| कल्पसूत्रवृत्तिः ( सुबोधिका ) | ,, |
| શ્રીપાલ રાજાનો રાસ | શ્રીવિનયવિજયગણિ |
| अजैनग्रन्थाः | प्रणेतारः |
| भागवतपुराणम् | श्रीवेदव्यासः |
| स्कान्दपुराणम् | ,, |
| तैत्तिरीयारण्यकम् | ,, |
| अथर्ववेदः | ,, |
| सारस्वतव्याकरणम् | श्रीअनुभूतिस्वरूपाचार्यः |
| वृत्तरत्नाकरः | भट्टश्रीकेदारः |
| विश्वकोशः | श्रीविश्वमुनीशः |
| शिशुपालवधः | महाकविश्रीमाघः |
| शिशुपालवधटीका | श्रीमल्लिनाथसूरिः |
| उद्धवदूतः | श्रीमाधवः |
| शिवमहिम्नःस्तोत्रम् | श्रीपुष्पदन्तः |
| શબ્દચિંતામણિ ( સંસ્કૃત–ગુજરાતી શબ્દકોષ ) | સવાઇલાલ વિ. છોટાલાલ વોરા |

## પદ્યાર્થ

" અયિ ( શ્રુત-દેવતા ) ! તારા સ્તનોની સમીપ રહેનારૂં એવું તેમજ વળી ( તેં કણ્ઠમાં પહેરેલા ) હારના મધ્યમાં રહેલું ( અર્થાત્ તેમાં પોરવેલું ) એવું કૌસ્તુભ ( નામનું ) રત્ન કે જે ઉદયાચળ અને અસ્તાચળની સમીપ જનારા સૂર્યના મણ્ડળ જેવું ( ગોળ ) છે, તે રત્ન અત્ર તારા દેહની શાશ્વતી શોભાને સહસ્રગુણી કરે છે; એથી કરીને તું વન્દન કરવા યોગ્ય છે."—૨૮

* * * *

अज्ञानमात्रतिमिरं तव वाग्विलासा
विद्याविनोदिविदुषां महतां मुखाग्रे ।
निघ्नन्ति तिग्मकिरणा निहिता निरीहे !
तुङ्गोदयाद्रिशिरसीव सहस्ररश्मेः ॥ २९ ॥

## टीका

हे 'निरीहे !' निर्गता ईहा–वाञ्छा यस्याः सा निरीहा–अयाचित्रतत्वाभिःस्पृहा तत्सम्बोधनं हे निरीहे ! अथवा नितरां ईहते–वाञ्छति यां सर्वो लोकः सा निरीहा, सर्वेषां वरप्रदानात्, तत्सम्बोधनं हे निरीहे ! । तव वाग्विलासा–भवत्या वाचां विलासा वाग्विलासाः महतां–गरिष्ठानां 'विद्याविनोदिविदुषां' विद्यानां चतुर्दशसंख्यानां विनोदः–पठनपाठनाभ्यासः स एषामस्तीति विद्याविनोदिनस्ते च ते विद्वांसश्च विद्याविनोदिविद्वांसस्तेषां विद्याविनोदिविदुषां मुखाग्रे–जिह्वाग्रे एकाङ्गत्वान्मुखशब्दस्य अर्थात् जिह्वैव गृह्यते तत्र निहिताः–स्थापिताः सन्तः अज्ञानमात्रतिमिरं अल्पमज्ञानं संशयादिरूपं अज्ञानमात्रं अल्पसंख्याया मात्रं च स्तोकमात्रं यत् तिमिरम्–अन्धकारं तत् अज्ञानमात्रतिमिरं निघ्नन्ति–नितरां घ्नन्ति–विनाशयन्ति–[२]स्फेटयन्ति–दूरीकुर्वन्तीत्यर्थः । तव वाग्विलासाः के इव ? सहस्ररश्मेः–सूर्यस्य तिग्मकिरणा इव तिग्माः–तीक्ष्णाः किरणास्तिग्मकिरणाः तुङ्गोदयाद्रिशिरसि निहिताः तिमिरं निघ्नन्ति तुङ्ग–उन्नतो योऽसौ उदयाद्रिस्तुङ्गोदयाद्रिस्तस्य तुङ्गोदयाद्रेः शिरः–शृङ्गं तुङ्गोदयाद्रिशिरस्तस्मिन् तुङ्गोदयाद्रिशिरसि, यथा उच्चैरुदयाचलमस्तके स्थिता रविरश्मयः सकलविश्वव्यापि तमः स्फेटयन्ति तद्वत् ॥ २९ ॥

## अन्वयः

( हे ) निर्–ईहे ! तुङ्ग–उदय–अद्रि–शिरसि निहिताः सहस्र–रश्मेः तिग्म–किरणाः इव तव वाच्–विलासाः महतां विद्या–विनोदिन्–विदुषां मुख–अग्रे निहिताः (सन्तः) अज्ञान–मात्र–तिमिरं निघ्नन्ति ।

## શ્લોકાર્થ

| | |
|---|---|
| अज्ञान=અજ્ઞાન. | तव ( मू० युष्मद् )=તારી. |
| मात्र=માત્ર. | वाच्=વાણી. |
| तिमिर=અંધકાર. | विलास=વિલાસ. |
| अज्ञानमात्रतिमिरं=અજ્ઞાનમાત્ર અંધકારને. | वाग्विलासाः=વાણીના વિલાસો. |

१ ' ग्रहणं ' इति ख–पाठः । २ ' स्फोटयन्ति ' इति ख–पाठः ।

ॐ ह्रीँ नमः ।

# આમુખ.

શ્રીમદ્ **માનતુંગ**સૂરિએ ચમત્કારિક શ્રી**ભક્તામરસ્તોત્ર** રચ્યું છે. આ સ્તોત્ર **શ્વેતામ્બર** અને દિગમ્બર બન્ને સમ્પ્રદાયને અતિ માન્ય હોવાથી એના ઉપર જેટલી ટીકાઓ ઉપલબ્ધ થાય છે, તેટલી બીજાં સ્તોત્રો ઉપર જોવામાં આવતી નથી. વળી એની પાદપૂર્તિરૂપ કાવ્યો જેટલાં દૃગ્ગોચર થાય છે તેટલાં બીજાં સ્તોત્રોનાં સમસ્યારૂપ કાવ્યો નજરે પડતાં નથી. આ ઉપરાંત આ કાવ્યની વિશેષ ખુબી તો એ છે કે આના દરેક શ્લોકને લગતાં જુદાં જુદાં યન્ત્રો અને મન્ત્રો પણ જોવામાં આવે છે.

જૈનોના મોટા ભાગનું મન્તવ્ય એવું છે કે "ભક્તામરના અંતિમ સિવાયનાં ચરણો ઉપર પણ સમસ્યારૂપ કાવ્યો રચાયેલાં છે." પરન્તુ અમારી પૂરતી તપાસમાં અમને આવાં કાવ્યો પ્રાપ્ત થયાં નથી, તેમજ પ્રથમ વિભાગ બહાર પડ્યા પછીથી અત્યાર સુધીમાંયે અમોને કોઈ તરફથી એ સમ્બન્ધમાં કાંઇ વિશેષ જાણવાનું મળ્યું નથી. તથાપિ કોઇ તરફથી એવાં કાવ્યોની પ્રતિઓ અમોને મળશે તો તે પ્રસિદ્ધ કરવા પ્રયત્ન સેવીશું.

પ્રત્યેક પદ્યના અંતિમ ચરણની સમસ્યારૂપ આઠ કાવ્યો અત્યાર સૂધી પ્રાપ્ત થયાં છે, જેમાંથી અમોયે બે પ્રથમ વિભાગમાં પ્રસિદ્ધ કર્યાં છે અને બીજાં ત્રણને આ દ્વિતીય વિભાગમાં પ્રસિદ્ધ કરવા ભાગ્યશાલી થયા છિયે, જ્યારે બાકીનાં તૃતીય વિભાગમાં પ્રસિદ્ધ કરવાનો પ્રબન્ધ આદરવામાં આવ્યો છે.

આ દ્વિતીય વિભાગમાં **સરસ્વતી**ભક્તામર, **શાન્તિ**ભક્તામર અને **પાર્શ્વ**ભક્તામર એમ ત્રણ કૃતિઓ અમે આપી છે. તે પૈકી પ્રથમ કૃતિ **શ્રીયશોવિજયજી જૈન પાઠશાલા** (મહેસાણા) તરફથી છપાઇ હતી, જેનો ઉપયોગ કરવાની એ સંસ્થાના કાર્યવાહક **શેઠ વેણીચંદ સૂરચંદે** અમને રજા આપી હતી, તે બદલ અમે સંસ્થાના ઋણી છિયે. આ સિવાય એક હસ્તપ્રતિ સતત વિહારી શાન્તમૂર્તિ મુનિમહારાજ **હંસવિજયજી** તરફથી મળી હતી, જે બદલ અમો તેઓશ્રીના પણ આભારી છિયે.

**શાન્તિ** અને **પાર્શ્વ**ભક્તામર પ્રસિદ્ધ કરતાં અમોને પરમ આહ્લાદ પ્રાપ્ત થાય છે, કારણ કે એ કાવ્યોને જનસમાજ સમક્ષ મૂકવાની પ્રથમ તક અમોનેજ પ્રાપ્ત થઇ છે.

**શાન્તિભક્તામર**ની અમોને નીચે મુજબ ત્રણ પ્રતો મળી હતી જે બદલ તે સંસ્થાઓના કાર્યવાહકોનો અમે અત્ર ઉપકાર માનિયે છિયે.

**विद्या**=વિદ્યા.
**विनोदिन्**=વિનોદી.
**विद्वस्**=વિદ્વાન્, પણ્ડિત.
**विद्याविनोदिविदुषां**=વિદ્યાના વિનોદી એવા પણ્ડિતોના.
**महतां** ( मू० महत् )=મોટા.
**मुख**=જીભ.
**अग्र**=આગલો ભાગ.
**मुखाग्रे**=જીભના અગ્ર ભાગ ઉપર.
**निघ्नन्ति** ( धा० हन् )=વિનાશ કરે છે.
**तिग्म**=તીક્ષ્ણ, પ્રખર.
**तिग्मकिरणाः**=તીક્ષ્ણ કિરણો.
**निहिताः** ( मू० निहित )=સ્થાપન કરાયેલા.
**निर्**=(૧) નિર્ગમતાવાચક અવ્યય;(૨) અત્યંતતાસૂચક અવ્યય.
**ईहा**=ઇચ્છા, વાંછા.
**निरीहे !**=(૧) હે જતી રહી છે ઇચ્છા જેની એવી, હે નિઃસ્પૃહી !; (૨) અત્યંત ઇચ્છે છે ( લોક ) જેને એવી ! ( સં૦ ).
**तुङ्ग**=ઉચ્ચ.
**उदय**=ઉદય.
**अद्रि**=પર્વત.
**शिरस्**=ટોચ.
**तुङ्गोदयाद्रिशिरसि**=ઉચ્ચ ઉદય-ગિરિના શિખર ઉપર.
**इव**=જેમ.
**सहस्र**=હજાર.
**रश्मि**=કિરણ.
**सहस्ररश्मेः**= સૂર્યના.

## પદ્યાર્થ

" ( યાચનાથી રહિત હોવાને લીધે ) હે નિઃસ્પૃહા ! [ અથવા ( વરદાન દેનારી હોવાને લીધે ) જેની લોકો અત્યંત વાંછા રાખે છે એવી ] હે ( **સરસ્વતી** ) ! જેમ ઉચ્ચ ઉદયગિરિ ઉપર રહેલાં સૂર્યનાં કિરણો વિશ્વવ્યાપી અંધકારનો નાશ કરે છે, તેમ તારી વાણીના વિલાસો પ્રખર તેમજ ([1]ચૌદ ) વિદ્યાના ( પઠનપાઠનાદિક ) વિનોદયુક્ત વિદ્વાનોની જિહ્વાગ્રે રહ્યા થકા ( સંશયાદિક ) અજ્ઞાનમાત્રરૂપી અંધકારનો વિનાશ કરે છે."—૨૯

* * * *

पृथ्वीतलं द्वयमपायि पवित्रयित्वा
शुभ्रं यशो धवलयत्यधुनोर्ध्वलोकम् ।
प्राग् लङ्घयत् सुमुखि ! ते यदिदं महिम्ना—
मुच्चैस्तटं सुरगिरेरिव शातकौम्भम् ॥ ३० ॥

## टीका

हे 'सुमुखि !' सुष्ठु—शोभनं मुखं यस्याः सा सुमुखी तत्सम्बोधने हे सुमुखि ! यदिदं ते—तव शुभ्रम्—उज्ज्वलं यशः अधुना-साम्प्रतं ऊर्ध्वलोकं धवलयति—स्वर्गलोकं निर्मलयति—देवलोकं व्याप्नोति । किं कृत्वा ? प्राक्—पूर्वं द्वयं पृथ्वीतलं—नागलोकं मर्त्यलोकं च पवित्रयित्वा—पावनं

---

[1] ચૌદ વિદ્યાઓ નીચે મુજબ છેઃ—

" षडङ्गी वेदाश्चत्वारो, मीमांसाऽन्वीक्षिकी तथा ।
धर्मशास्त्रं पुराणं च, विद्या एताश्चतुर्दश ॥ १ ॥ "

આ સંબંધમાં વિશેષ માહિતી માટે જુઓ **વીર-ભક્તામર** ( પૃ૦ ૫૯ ).

૧ શ્રીજૈનાનન્દપુસ્તકાલય—ગોપીપુરા, સુરત.

૨ શ્રીડહેલાના ઉપાશ્રયનો ભંડાર—અમદાવાદ.

૩ શેઠ સુબાજી રવચંદ જયચંદ જૈન વિદ્યાશાલા—અમદાવાદ.

**પાર્શ્વભક્તામર**ની હસ્તપ્રતિ શ્રી**વિજયવલ્લભ**સૂરિના શિષ્યરત્ન મુનિરાજ **વિચક્ષણવિજયજી**એ અનુવાદકને આપી હતી, જે બદલ તેઓશ્રીનો પણ અમે ઉપકાર માનિયે છિયે. વળી જે મહાનુભાવોની હસ્ત-પ્રતિના આધારે પરિશિષ્ટગત કાવ્યો અમે પ્રસિદ્ધ કરી શક્યા છિયે તેમનો પણ આ સ્થળે અમે આભાર માનિયે છિયે.

આ અમૂલ્ય ગ્રન્થનું સંશોધનાદિક કાર્ય **સુરત**વાસ્તવ્ય, પરમ જૈનધર્માવલમ્બી, તેમજ શ્રીમદ્ **વિજયાનન્દ**સૂરીશ્વર ( **આત્મારામ**જી મહારાજ ) અને તેમના સન્તાનીય મુનિરાજ શ્રી**હર્ષવિજયને** ગુરૂ તરીકે પૂજનારા અને તેઓશ્રીના પાદસેવનથી જૈનધર્મના તીવ્ર અનુરાગી બનેલા સ્વર્ગસ્થ રા. **રસિકદાસ વરજદાસ કાપડિયા**ના જ્યેષ્ઠ પુત્ર પ્રોફેસર **હીરાલાલ** એમ. એ. દ્વારા કરાવવામાં આવ્યું છે. એઓએ કર્તાઓનાં જીવન વિગેરેના સંબંધમાં વિવેચન કરેલું હોવાથી અમારે તે સંબંધમાં કંઇ ઉમેરવાનું બાકી રહેતું નથી.

સંસ્કૃતના અલ્પ અભ્યાસીઓને સુગમતા થઇ પડે તેટલા માટે અન્વય અને શબ્દાર્થ તેમજ જિનસિદ્ધાંતોથી અપરિચિત વર્ગ જૈન પારિભાષિક શબ્દો વિગેરે સરલતાથી સમજી શકે તેટલા માટે સ્પષ્ટીકરણ બનતી કાળજીપૂર્વક તૈયાર કરાવ્યાં છે.

અમારા પ્રયાસની સફળતા પાઠક-વર્ગની પસંદગી ઉપર તેમજ આ ગ્રન્થના લેવાતા લાભ ઉપર રહેલી હોવાથી આ સંબંધે વિશેષ નિવેદન કરવાનું બાકી રહેતું નથી. પરંતુ જો આ પદ્ધતિ વિશેષ ઉપયોગી માલૂમ પડશે તો ભવિષ્યમાં આવી પદ્ધતિથી બીજા ગ્રન્થો બહાર પાડવા અમારી પ્રબળ ઇચ્છા છે.

આગમોદ્ધારક વ્યાખ્યાપ્રજ્ઞ જૈનાચાર્ય શ્રીમદ્ **આનન્દસાગર**સૂરિ આ **આગમોદય સમિતિ**ના ઉત્પત્તિ સમયથીજ અપૂર્વ સાહાય્ય આપતા રહ્યા છે, તે મુજબ આ ગ્રન્થ પણ પ્રસિદ્ધ કરવામાં તેમણે જે સાહાય્ય આપી છે તે બદલ તેઓશ્રીનો અમો જેટલો ઉપકાર માનિયે તેટલો ઓછોજ છે.

સંશોધનકાર્યમાં મદદ કરવા માટે અનુયોગાચાર્ય શ્રી**ક્ષાંતિવિજય** તેમજ દક્ષિણવિહારી મુનિવર્ય શ્રી**અમરવિજય**ના શિષ્યરત્ન મુનિરાજ **ચતુરવિજયજી**ના અમે આભારી છિયે.

પ્રથમ વિભાગની જેમ આ વિભાગનું પણ વળી શુદ્ધિ-પત્ર તૈયાર કરી આપ્યા બદલ અમે જ્યોતિઃશાસ્ત્રવિશારદ જૈનાચાર્ય શ્રી**વિજયદાન**સૂરિના પણ **ઋણી** છિયે.

પ્રથમ વિભાગને માટે મળેલા અભિપ્રાયો આ વિભાગના અન્તમાં જોડવામાં આવ્યા છે, જ્યારે આ વિભાગ સંબંધી મળેલા અભિપ્રાય પ્રારમ્ભમાં આપવામાં આવેલ છે; તે તરફ પાઠકગણનું ધ્યાન ખેંચવાની અમે રજા લઇએ છિયે.

વિક્રમ સંવત્ ૧૯૮૩ ફાગણ શુદ ૭ ગુરૂવાર.
તા૦ ૧૦-૩-૧૯૨૭, જવેરી બજાર-મુંબાઈ.

**જીવણચંદ સાકરચંદ જવેરી**
માનદ સેક્રેટરી.

कृत्वा। किंविशिष्टं पृथ्वीतलं ? 'अपायि' जन्ममृत्युरूपौ अपायौ अस्यास्तीत्यपायि-सकलुषं-मलिनं पवित्रयित्वा-विमलीकृत्य। तव यशः किं कुर्वत् ? महिम्नां-प्रभावानामुच्चैः-आधिक्येन सुरगिरेः-सुमेरोस्तटं तदधित्यकां लङ्घयत्-अतिक्रामत् "अधित्यकोर्ध्वभूमिः" इति हैमः (का०४, श्लो०१०१)। उत्प्रेक्षते-तव यशः किं कुर्वदिव ? महिम्नामुच्चैः-अतिशयेन शातकौम्भं-स्वर्णमयं सुमेरोस्तटं लङ्घयदिव। "जाम्बूनदं शातकुम्भं, स्वर्णं हेम च हाटकं" इति कोषः। अथवा त्वद्यशः किमिव ? शातकौम्भमिव-तीर्थकृज्जन्मस्नपनकलशमिव अथवा कामकुम्भमिव कामितदायकम्। अत्र कुम्भकलशशब्दौ पुंनपुंसकलिङ्गौ। शातकौम्भं पृथ्वीतलं पवित्रीकृत्योर्ध्वलोकं विमलीकुरुते इति भावः ॥ ३० ॥

## अन्वयः

( हे ) सु-मुखि ! प्राक् अपायि द्वयं पृथ्वी-तलं पवित्रयित्वा यद् इदं ते यशः शुभ्रं ( शातकौम्भं इव ) (जातं), ( तत् ) महिम्नां उच्चैः सुर-गिरेः शातकौम्भं तटं लङ्घयत् इव अधुना ऊर्ध्व-लोकं धवलयति।

## શબ્દાર્થ

पृथ्वी=પૃથ્વી, ભૂમિ.
तल=સપાટી.
पृथ्वीतलं=પૃથ્વી-તલને.
द्वयं ( मू० द्वय )=બે.
अपायि ( अपायिन् )=સંકટસહિત.
पवित्रयित्वा ( मू० पवित्र )=પવિત્ર કરીને.
शुभ्रं ( मू० शुभ्र )=ઉજ્જવળ.
यशः ( मू० यशस् )=કીર્તિ.
धवलयति ( मू० धवल )=શ્વેત બનાવે છે.
अधुना=હમણાં.
ऊर्ध्व=ઊર્ધ્વ.
लोक=ભુવન.
ऊर्ध्वलोकं=સ્વર્ગ-લોકને.
प्राक्=પહેલાં.
लङ्घयत् ( धा० लङ्घ् )=ઉલ્લંઘન કરતી.
सु=સુન્દરતાવાચક અવ્યય.
मुख=વદન.
सुमुखि !=સુન્દર છે વદન જેનું એવી ! ( સં० )
ते ( मू० युष्मद् )=તારી.
यद्=જે.
महिम्नां ( मू० महिमन् )=મહિમાઓના.
उच्चैः=અતિશય વડે.
तटं ( मू० तट )=તટ.
सुर=દેવ.
सुरगिरेः=સુર-ગિરિના, મેરૂના.
इव=જેમ.
शातकौम्भं ( मू० शातकौम्भ )=( १ ) સુવર્ણમય; ( २ ) કળશ; ( ३ ) કામ-કુમ્ભ.

## પદ્યાર્થ

"હે સુંદર વદનવાળી ( સરસ્વતી ) ! પ્રથમ તો ( જન્મ-મૃત્યુરૂપી ) સંકટોથી વ્યાપ્ત એવા ( અર્થાત્ મલિન ) એવા ( નાગ-લોક અને મૃત્યુ-લોકરૂપી ) બે પૃથ્વી-તલોને પવિત્ર કરીને જે આ તારી કીર્તિ ઉજ્જવળ ( તેમજ તીર્થંકરના જન્મ-સ્નાત્રના ) કળશના જેવી [ અથવા ( વાંછિતદાયક હોવાથી ) કામકુમ્ભના જેવી ] (બની) છે, તે મહિમાઓના અતિશય વડે જાણે સુમેરૂના સુવર્ણમય તટનું ઉલ્લંઘન કરતી ન હોય તેમ હમણાં સ્વર્ગ-લોકને શ્વેત (અર્થાત્ નિર્મળ) બનાવી રહી છે."—૩૦

* * *

१ 'कोशः' इति ख-पाठः। २ '०सकौ' इति ख-पाठः।

